शास्त्रिदुर्गाशङ्करसंस्कृतग्रन्थमालायाः कर्मकाण्डविभागे तृतीयपुष्पम्

# अथ शुक्लयजुर्वेदीयग्रहशान्तिप्रयोगः

पं. श्रीदुर्गाशङ्कर शास्त्री

विक्रमाब्दाः १९८५

शास्त्रिदुर्गाशङ्करसंस्कृतग्रन्थमालायाः कर्मकाण्डविभागे तृतीयपुष्पम् ।

# अथ शुक्लयजुर्वेदीयग्रहशान्तिप्रयोगः

सिद्धपद (सिद्धपुर) निवासिना ठाकरोपाह्वविद्वद्वर-उमाशङ्करतनुजनुषा श्रीवालुकेश्वरसंस्कृतवैदिकपाठशालाप्रधाना-
ध्यापकेन दुर्गाशङ्करशास्त्रिणा लोकोपकृतये सङ्गृह्य टिप्पण्यादिभिः समलङ्कृत्य परिशोध्य प्रकाशितः ॥

शकाब्दाः १८५१ । विक्रमाब्दाः १९८५ । खिस्ताब्दाः १९२९ ।

॥ सिद्धपुरे कृतवसतिर्मनोमाशङ्कराङ्गसंभूतः । दुर्गाशङ्करशास्त्री ग्रहशान्तिं मुद्रयामास ॥



प्रथमावृत्तिः ।

मूल्यं रूपकमेकम्. ( १ )

# ॥ अथ सद्गुरुवर्यश्रीचेतनानन्दप्रशस्तिः ॥



गीर्वाणविद्याभूषण शास्त्री
दुर्गाशङ्कर उमाशङ्कर शर्मा.

चिदेव सर्वं चिति भासमानं चितो विभिन्नं न हि किञ्चिदस्ति ॥ समस्तलोकानिति बोधयन्तं तं चेतनानन्दगुरुं भजेऽहम् ॥ १ ॥ आनन्दमानन्दकरं प्रमोदं मोदप्रदं सौख्यमयं सुतोषम् ॥ अद्वैतमाद्यन्तविहीनमेकं तं चेतनानन्दगुरुं भजेऽहम् ॥ २ ॥ सदयहृदयकान्तं पूज्यमानं सुसभ्यैर्ग्रथितललितपद्यैर्वर्ण्यमानं कवीन्द्रैः ॥ भुवि वितरणलक्ष्मीं प्रीतिपूर्वं दधानं परमगुरुमहं तं चेतनानन्दमीडे ॥ ३ ॥ मुखकमलसुधांशोर्वाक्सुधां प्रस्रवन्तं जनहितशुभकार्योत्तारणाप्रस्थितं यम् ॥ निजगुणगणकीर्त्यान्तर्गतं सज्जनानां परमगुरुमहं तं चेतनानन्दमीडे ॥ ४ ॥ ददतमतिसहायं दीनगीर्वाणवाण्यां स्वयमतिशयहर्षादुत्सुकेभ्यः शिशुभ्यः ॥ सविनयनयदात्रीमार्यवाचं वहन्तं परमगुरुमहं तं चेतनानन्दमीडे ॥ ५ ॥ सततममरवाणीशोभिविद्वज्जनानां स गुरुरिव सुराणां शोभमानः सभायाम् ॥ निजनिकटगतांस्तान्सत्पथे योजयन्तं परमगुरुमहं तं चेतनानन्दमीडे ॥ ६ ॥ अतिशयचपलानामिन्द्रियाख्याधराणामचपलमतिदुर्गं दुर्जयानामरीणाम् ॥ नगवदचलचित्तं सत्यमात्रैकनिष्ठं परमगुरुमहं तं चेतनानन्दमीडे ॥७॥ प्रबलगुणगणानामेकपात्रं धरायां प्रशमितदुरितानां भाजनं मङ्गलानाम् ॥ जगति निखिलजन्तुश्रेयसे यत्नवन्तं परमगुरुमहं तं चेतनानन्दमीडे ॥ ८ ॥ सततमभिसरन्तं सत्पथे नीतियुक्तं हरचरणसरोजे सर्वदैवैकचित्तम् ॥ सुकविरचितकाव्योद्यानमध्ये वसन्तं परमगुरुमहं तं चेतनानन्दमीडे ॥ ९ ॥ यस्मादाप्ता विद्याऽज्ञानतमोनाशिनी मया शिष्टात् ॥ दुर्गाशङ्करनामा तस्याङ्घ्रिसरोरुहं ह्यहं नौमि ॥ १० ॥ इति सद्गुरुवर्यश्रीचेतनानन्दप्रशस्तिः ॥

## शास्त्रीदुर्गाशङ्करसंस्कृतग्रन्थमालानां ब्राह्मणोए आवश्यक संग्राह्य पुस्तको.

# कर्मकाण्डविभाग.

१ **ब्रह्मकर्मसमुच्चय**—यजुर्वेदी विप्रोए अवश्य सङ्ग्राह्य छे. एमां १ प्रातरुत्थानविधि २ भूमिस्पर्श ३ प्रातःस्मरण ४ मूत्रपुरीषोत्सर्गविधि ५ दन्तधावनविधि ६ नद्यादौ नित्यस्नानप्रयोग ७ गृहे प्रातःस्नानप्रयोग ८ हेमाद्रिस्नानप्रयोग ९ गौणस्नानविधि १० दशविधस्नानप्रयोग ११ प्रातःसन्ध्या १२ पञ्चायतनदेवतास्थापनप्रकार शिवपञ्चायतनपूजा १३ मध्याह्नसन्ध्या १४ सूर्योपस्थान १५ ब्रह्मयज्ञ १६ नित्यतर्पण १७ वैश्वदेव १८ भोजनविधि १९ कात्यायनपरिशिष्टभोजनसूत्र २० सायंसन्ध्या २१ शयनविधि २२ दारोपगमविधि २३ दशविधस्त्रीसङ्ग २४ यज्ञोपवीतनिर्माणप्रकार २५ नूतनयज्ञोपवीतधारणप्रयोग २६ प्रमादाद्यज्ञोपवीतनाशे विशेषप्रयोग २७ सूतके सन्ध्याविधि २८ सूत्रोक्तत्रिकालसन्ध्या २९ भस्मोध्दूलनप्रयोग ३० रुद्राक्षधारणप्रयोग ३१ भूशुद्धि ३२ भूतशुद्धि ३३ प्राणप्रतिष्ठा ३४ अन्तर्मातृका ३५ बहिर्मातृका ३६ महान्यास ३७ लघुन्यास ३८ रुद्रपूजन ३९ पञ्चवक्त्रपूजन ४० ऋष्यादिस्मरणपूर्वकरुद्राभिषेक (रुद्राष्टाध्यायी) ४१ रूपरुद्रप्रकार ४२ रुद्रैकादशिनीप्रकार ४३ भगवद्गीतानो पन्दरमो अध्याय ४४ श्रीसूक्त ४५ सबीजनवग्रहमन्त्रजपप्रयोग ४६ चण्डीकवच ४७ एकषष्ट्युत्तरशतधा-पक्षमहारुद्रे अन्वाधान ४८ कुशकण्डिका ४९ आघारावाज्यभागहोम ५० द्रव्यत्यागसङ्कल्प ५१ अग्निपूजन ५२ अग्नौरुद्रध्यान ५३ अग्नौरुद्रपूजन ५४ वराहुति ५५ ग्रहमण्डलदेवताहोम ५६ सविनियोगशिवसङ्कल्पसूक्तहोम ५७ सविनियोगपुरुषसूक्तहोम ५८ सविनियोगनारायणसूक्तहोम ५९ सविनियोग अप्रतिरथसूक्तहोम ६० सविनियोगमैत्रसूक्तहोम ६१ सविनियोग अस्त्ररूपाङ्ग शतरुद्रियाध्यायहोम ६२ एकषष्ट्युत्तरपक्षाश्रयेण प्रधानहोम ६३ सविनियोग महच्छिरोरूप वयंसोमेत्यष्टक-ण्डिकाहोम ६४ सविनियोगशान्त्यध्यायमन्त्रहोम ६५ त्रयस्त्रिंशद्देवात्मकहरिहरात्मकद्वादशलिङ्गतोभद्रदेवताहोम ६६ रुद्रपीठदेवताहोम ६७ ग्रहपीठस्थसर्वतोभद्रदेवताहोम ६८ ब्रह्मादिवास्तुपीठदेवताहोम ६९ रुद्रकल्पद्रुमानुसारिस्कान्दकाशीखण्डोक्तगजाननादिमृगलोचनान्ताश्चतुःषष्टियोगिनीपीठदेवताहोम ७० एकपञ्चाशत्क्षेत्रपालपीठदे-वताहोम ७१ अनादिष्टप्रायश्चित्तहोम ७२ स्विष्टकृद्धोम ७३ बलिदान ७४ पूर्णाहुतिहोम ७५ वसोर्धाराहोम ७६ रुद्रस्तुति ७७ अग्निप्रदक्षिणा ७८ भस्मधारण (

संस्रवप्राशनादिप्रणीताविमोकान्तकर्म ८० श्रेयोदान ८१ दक्षिणादान ८२ स्वर्णादिमहादान ८३ यजमानाभिषेक ८४ अवभृथस्नानप्रयोग ८५ घृतपात्रदान ८६ देवताविसर्जन ८७ पीठादिदान ८८ अग्निविसर्जन ८९ मण्डपदान ९० कर्मसंपूर्णतावाचन ९१ प्रैषात्मकपुण्याहवाचन ९२ एकधा ९३ त्रेधा ९४ षोढाषोडशधा ९५ चतुश्चत्वारिंशद्धा इत्यादि विभागात्मकरुद्रहोमस्वाहाकारोविगेरेपंचाणु विषयोथी भरपूर छे. मूल्यमात्र रुपैया बे २

२ **ग्रहशान्तिप्रयोग**—१ गणपतिपूजन २ पुण्याहवाचन ३ मातृकापूजन ४ वसोर्धारापूजन ५ आयुष्यमन्त्रजप ६ नान्दिश्राद्ध ७ आचार्यादि ऋत्विग्वरण ८ दिग्रक्षण ९ पञ्चगव्यकरण १० भूमिप्रोक्षण ११ भूम्यादिपूजन १२ अग्निप्रतिष्ठापन १३ ग्रहमण्डलदेवतास्थापनप्रतिष्ठापूजन प्रयोग १४ अग्न्युत्तारण १५ प्राणप्रतिष्ठाप्रयोग १६ अन्वाधान १७ कुशकण्डिका १८ द्रव्यत्यागसङ्कल्प १९ अग्निपूजन २० वराहुति २१ ग्रहमण्डलदेवताहोम २२ गुग्गुलहोम २३ शत्रुहोम २४ लक्ष्मीहोम २५ व्याहृतिहोम २६ उत्तरपूजन २७ स्विष्टकृद्धोम २८ नवाहुतिहोम २९ बलिदान ३० पूर्णाहुतिहोम ३१ वसोर्धाराहोम ३२ भस्मधारण ३३ पूर्णपात्रदान ३४ श्रेयोदान ३५ दक्षिणादान ३६ यजमानाभिषेक ३७ घृतपात्रदान ३८ भूयसीदक्षिणाप्रदान ३९ पीठादिदान ४० अग्निविसर्जन ४१ देवताविसर्जन ४२ कर्मसंपूर्णतावाचन ४३ प्रैषात्मकपुण्याहवाचन ४४ ग्रहशान्तिसाहित्यनी यादी ४५ ग्रन्थकर्तृप्रशस्ति ४६ ग्रहशान्त्युपयोगीपरिभाषा ४७ ग्रहशान्तिप्रयोगानुक्रम ॥ ए प्रमाणे सुडतालीस विषयोथी भरपूर छे. मूल्यमात्र रुपैयो एक.

३ **रुद्रस्वाहाकारसमुच्चय**—१ एकधा २ त्रेधा ३ षोढा ४ षोडशधा ५ चतुश्चत्वारिंशद्धा ६ अष्टचत्वारिंशद्धा ७ एकषष्ट्युत्तरशतधा पञ्चविंशत्युत्तरचतुः–शतधा ए आठ विभागो ८ एकषष्ट्युत्तरशतधा पक्षनो आश्रय लइने ९ अन्वाधान १० कुशकण्डिका ११ आघारावाज्यभागहोम १२ द्रव्यत्यागसङ्कल्प १३ अग्निपूजन १४ अग्नौ रुद्रध्यानं १५ अग्नौ रुद्रपूजन १६ वराहुति १७ ग्रहमण्डलदेवताहोम १८ सविनियोगशिवसङ्कल्पसूक्तहोम १९ सविनियोगपुरुषसूक्तहोम २० सविनियोगनारायणसूक्तहोम २१ सविनियोग अप्रतिरथसूक्तहोम २२ सविनियोगमैत्रसूक्तहोम २३ सविनियोग अस्त्ररूपाङ्गशतरुद्रियाध्यायहोम २४ एकषष्ट्युत्तरपक्षाश्रयेण प्रधानहोम २५ सविनियोगमहच्छिरोरूपवयंसोमेत्यष्टकण्डिकाहोम २६ सविनियोगशान्त्यध्यायमन्त्रहोम २७ त्रयस्त्रिंशद्रेखात्मकहरिहरात्मकद्वादशलिङ्गतोभद्रदेवताहोम २८ रुद्रदेवताहोम २९ ग्रहपीठस्थसर्वतोभद्रदेवताहोम ३० ब्रह्मादिवास्तुपीठदेवताहोम ३१ रुद्रकल्पद्रुमानुसारिस्कान्दकाशीखण्डोक्ता गजाननादिमृगलोचनान्ताश्चतुःषष्टियोगिनीपीठदेवताहोम ३२ एकपञ्चाशत्क्षेत्रपालपीठदेवताहोम ३३ अनादिष्टप्रायश्चित्तहोम ३४ स्विष्टकृद्धोम ३५ बलिदान ३६ पूर्णाहुतिहोम ३७ वसोर्धाराहोम ३८

रुद्रस्तुति ३९ अग्निप्रदक्षिणा ४० भस्मधारण ४१ संस्रवप्राशनादिप्रणीताविमोकान्तकर्म ४२ श्रेयोदान ४३ दक्षिणादान ४४ स्वर्णादिमहादान ४५ यजमानाभिषेक ४६ अवभृथस्नानप्रयोग ४७ घृतपात्रदान ४८ देवताविसर्जन ४९ पीठादिदान ५० अग्निविसर्जन ५१ मण्डपदान ५२ कर्मसंपूर्णतावाचन ५३ प्रैषात्मकपुण्याहवाचन ए प्रमाणे त्रेपन विषयोथी ग्रथित छे. मूल्य मात्र रुपैयो एक. १

**४ पारस्करगृह्यसूत्र अने रुद्रसूत्र तथा चरणव्यूह**—शुक्लयजुर्वेदमाध्यन्दिनीयशाखाना विप्रोमाटे सोळे संस्कार कराववा तथा अभिषेकात्मक अने होमात्मक महारुद्र कराववा तथा चारे वेदोनी शाखाओ विगेरे जाणवामाटे अत्युपयोगी छे. मूल्य रुपैयो एक. १

**५ उपयुक्तमन्त्रसमुच्चय ( मन्त्रसंहिता )**—शुक्लयजुर्वेदमाध्यन्दिनीय शाखाना विप्रो माटे प्रयोगने अनुसरी शान्तिसूक्त, भद्रसूक्त, शिखाबन्धन, पवित्रधारण, तिलकधारण, दिग्रक्षण, वरुणावाहन, प्रतिष्ठापन, प्रोक्षण, दीपपूजन, गणेशावाहन, आसन, पाद्य, अर्घ, आचमनीय, स्नान, पञ्चामृतस्नान, गन्धोदकस्नान, उद्वर्तनस्नान, शुद्धोदकस्नान, वस्त्रार्पण, यज्ञोपवीतार्पण, गन्धार्पण, अक्षतार्पण, पुष्पार्पण, दूर्वार्पण, सौभाग्यद्रव्यार्पण, धूपार्पण, दीपार्पण, नैवेद्यार्पण, ताम्बूलार्पण, फलार्पण, दक्षिणार्पण, नीराजन, मन्त्रपुष्पाञ्जलि, प्रदक्षिणा, भूमिस्पर्श, यवप्रक्षेप, कलशस्थापन, गन्धप्रक्षेप, धान्यप्रक्षेप, सर्वौषधिप्रक्षेप, पञ्चपल्लवप्रेक्षप, सप्तमृत्प्रक्षेप, पूर्णपात्रनिधान, दीर्घायुष्यब्रुवण, आर्शीवाद, पुण्याहवाचन, अभिषेचन, नीराजन, भूमिपूजन, कूर्मपूजन, अग्निग्रहण, खनन, जलसेचन, यवनिक्षेप, स्तम्भोच्छ्रयण, स्तम्भरोपण, स्तम्भस्थिरीकरण, शाखासुतैलारोपण, गौर्यादिषोडशमातृकावाहन, श्र्यादिसप्तवसोर्धारावाहन, आयुष्यमन्त्रजप, पितृविसर्जन, पित्रनुव्रजन, आचार्यवरण, ब्रह्मवरण, सदस्यवरण, ऋत्विग्वरण, पत्नीकङ्कणबन्धन, पञ्चगव्यकरण, अग्निस्थापन, अग्निध्यान, सूर्यादिग्रहमण्डलदेवतावाहन विगेरेना मन्त्रो छे तथा पुण्याहवाचनोपयोगी चारे वेदोना अने ब्राह्मणनामन्त्रो सङ्कलित छे. मूल्य आना बार. ( रु. ०॥। )

**६ पुराणोक्तसर्वपूजा अने तान्त्रिकदेवीपूजा**—जेमां आचमन, प्राणायाम, तिलकधारण, भद्रसूक्त, देवतानमस्कार, गणपत्यादिस्मरण, सङ्कल्प, दिग्रक्षण, कलशाराधन, शङ्खघण्टार्चन, पवित्रीकरण, दीपपूजन, ध्यान, आवाहन, आसन, पाद्य, अर्घ्य, आचमनीय, पञ्चामृतस्नान, गन्धोदकस्नान, उद्वर्तनस्नान, शुद्धोदकस्नान, पूर्वाङ्गपूजन, अभिषेकस्नान, वस्त्र, यज्ञोपवीत, गन्ध, अक्षत, पुष्प, सौभाग्यद्रव्य, धूप, दीप, नैवेद्य, मध्येपानीय, ताम्बूल, फल, दक्षिणा, नीराजन, मन्त्रपुष्पाञ्जलि, प्रदक्षिणा, प्रार्थनापूर्वकनमस्कार, राजोपचार, विशेषार्ध इत्यादि उपचारार्पणना सुललित मन्त्रो छे अने तान्त्रिकदेवीपूजा पण छे. जेमां राजोपचारपूजन

( चतुःषष्ट्युपचारपूजन ) करवानां रमणीय पद्यो छे तथा आवरणपूजाविधि विगेरे अत्युपयोगी विषयो छे: शतचण्डी, सहस्रचण्डी आदि प्रयोगोमां देवीपूजन करवा-माटे याज्ञिक ब्राह्मणोए अवश्य संग्राह्य छे. मूल्य आना छ. ।=

७ वेदोक्तसर्वपूजा अने रुद्राष्टाध्यायी—शुक्लयजुर्वेदमाध्यन्दिनीय शाखाना विप्रोमाटे सर्वेदेवोना पूजनोपयोगी स्वरसहित मन्त्रोनो अपूर्व संग्रह छे अने रुद्रकल्पद्रुमानुसारी रुद्राष्टाध्यायी पण स्वरसहित छे. मूल्य आना चार.

८ ब्रह्मनित्यकर्मसमुच्चयप्रथमभाग—शुक्लयजुर्वेदमाध्यन्दिनीयशाखाना विप्रोमाटे प्रातरुत्थानथी प्रातःसन्ध्या सुधीनुं एटले ब्राह्ममुहूर्तथी पोणाचार घडीना ( दोढ कलाकना ) प्रथमभागनुं आह्निक के जेमां प्रातरुत्थान, करतलावलोकन, भूमिस्पर्श, प्रातःस्मरण, मूत्रपुरीषोत्सर्गविधि, दन्तधावनविधि, गृहेप्रातःस्नानप्रयोग, गौणस्नानो, प्रातःसन्ध्याप्रयोग अने सूत्रोक्तत्रिकालसन्ध्या. एटला विषयो गुजराती भाषामां समजण साथे छे. तेमज प्रत्येक विधियोसम्बन्धी शास्त्रीयवचनो तथा मध्याह्न अने सायंसन्ध्या टिप्पणीमां छे, मूल्य मात्र आना चार.

९ सामवेदत्रिकालसन्ध्या—सामवेदी विप्रोमाटे त्रिकालसन्ध्या, गोभिलप्रणीतसन्ध्यासूत्र तथा सामवेदीयपुरुषसूक्त सस्वर छे, मूल्य आना त्रण.

१० आरतिसमुच्चय—गणपति, देवी, शिव, पञ्चायतन, विष्णु, नृसिंह, राम अने भागवतादिनी त्रीश आरतिओ अने मङ्गलाष्टक छे. मूल्य आना बे.

## ज्योतिष विभाग

११ जातकालङ्कार—जन्मकुंडली उपरथी जिन्दगीनुं भविष्य जाणवानो आरसो. एमां शरीर, धन, बन्धु, माता पिता, वाहन, सन्तान, बुद्धि, विद्या, रोग-शत्रु, स्त्रीसुख, मृत्यु, धर्म, राज्य, व्यापार, लाभ, व्यय इत्यादि वृत्तान्त जाणवाना अढीसो विषयो छे. आ ग्रन्थ पासे राखवाथी साधारण गुजराती वांचनार पण पोतानी जन्मकुंडली उपरथी शुभाशुभ वृत्तान्त सहज जाणी शके छे. मूल संस्कृत श्लोको, पदच्छेद अने शब्देशब्दनो अन्वयार्थ होवाथी प्राथमिक ज्योतिःशास्त्र भणनारा विद्यार्थीओने तथा भणावनारा शिक्षकोने अत्युपयोगी छे. मूल्य रुपैया बे. २

१२ ग्रहगोचरज्योतिष—मूळसहित गुजराती भाषान्तर छे. गोचरराशिमां रहेला ग्रहोनु शुभाशुभ फल, पनोती अने तेना पायानुं फल इत्यादि जाणवामाटे उपयोगी छे. मूल्य आना त्रण.

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीभाइशङ्कराज्जातः स उमाशङ्करो द्विजः ॥ पिता मे सुकृती जन्मप्रदाता गुरुरादिमः ॥ १ ॥ शुक्लोपाह्वमहानन्दतनयो देवशङ्करः ॥ दीक्षागुरुर्द्वितीयोऽगात्पश्चाद्भूत्वा यतिर्दिवम् ॥ २ ॥ वेदान्तादिबृहद्विद्यां सरहस्यामुपादिशत् ॥ गुरुः श्रीचेतनानन्दब्रह्मचारी तृतीयकः ॥३॥ एतां गुरुत्रयीं स्मृत्वा दुर्गाशङ्करशास्त्रिणा ॥ ग्रहशान्तिर्वैदीकीयं यथामति विरच्यते ॥४॥ श्रमोऽयं क्रियते नूनं परोपकृतये मया ॥ स्यान्न्यूनमिह यत्किञ्चित्क्षन्तव्यं तत्स्वयं बुधैः ॥ ५ ॥

अथ वैदिकग्रहशान्तिप्रयोगप्रारम्भः ॥ कृतमङ्गलस्नानः स्वलङ्कृतः सम्भृतमङ्गलसम्भारो निर्णेजनान्तपञ्चमहायज्ञान्त कृतनित्यक्रियः परिहिताहतसोत्तरीयवासाः मङ्गलरङ्गवल्लीमण्डितशुद्धस्थले श्रीपर्ण्यादिप्रशस्तदारुनिर्मिते कुशोत्तरकम्बलाद्यास्तृते स्वासने प्राङ्मुखो यजमानं ऊर्णवस्त्राच्छादिते पीठे उपविश्य पत्नीं स्वदक्षिणतः प्राङ्मुखीमुपवेशयेत् ॥

शिखाबन्धनम्—मानस्तोक इति मन्त्रस्य कुत्सऋषिः जगतीछन्दः एको रुद्रोदेवताशिखाबन्धने विनियोगः ॥ ॐमानस्तोकेतनयेमानऽ-आयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तः सदमित्त्वाहवामहे ॥ १६/१६ ॥ इत्यङ्गुष्ठमात्रांशिखांनैर्ऋत्यांबध्नीयात् ॥

पवित्रधारणम्—सव्यहस्ते कुशत्रयं दक्षिणहस्ते कुशद्वयं धारयेत्—ॐपवित्रेस्थोवैष्णव्यौसवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः ॥ १२/१ ॥ तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामः पुनेतच्छकेयम् ॥ ४/४ ॥ अनामिकयोरेकैकं पवित्रं धारयेत् ॥

आचमनम् ॐकेशवायनमः स्वाहा ॐनारायणायनमः स्वाहा ॐमाधवायनमः स्वाहा ॥ हस्तप्रक्षालनम्–ॐगोविन्दायनमः ॥

प्राणायामः—प्रणवस्य परब्रह्मऋषिः । परमात्मादेवता । दैवी गायत्रीछन्दः । भूरादिसप्तव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा ऋषयः । अग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवादेवताः । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि । तत्सवितुरित्यस्य विश्वामित्रऋषिः । सविता देवता । गायत्रीछन्दः । आपोज्योतिरित्यस्य प्रजापतिऋषिः । ब्रह्माग्निवायुसूर्यादेवताः । यजुश्छन्दः ।

सर्वेषां प्राणायामे विनियोगः ॥ ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यम् ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ ३५/३ ॥ ॐआपोज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ एवं पूरकः कुम्भकः रेचकः क्रमेण त्रिवारं पठेत् ॥

यजमानललाटे तिलकं कुर्यात्—ॐस्वस्तिनऽइन्द्रोवृद्धश्रवाꣳस्वस्तिनः पूषाविश्ववेदाꣳ ॥ स्वस्तिनस्ताक्ष्योऽअरिष्टनेमिꣳस्वस्तिनोबृहस्पतिर्दधातु ॥ १९/२५ ॥ स्वस्तिस्तु याऽविनाशाख्या पुण्यकल्याणवृद्धिदा । विनायकप्रिया नित्यं वरदास्तु सदा तव ॥

भद्रसूक्तं पठेत्—ॐआनोभद्राःक्रतवोयन्तुविश्वतोदब्धासोऽअपरीतासऽउद्भिदः ॥ देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ १४/२५ ॥ देवानाम्भद्रासुमतिर्ऋजूयतान्देवानाꣳरातिरभिनोनिवर्त्तताम् ॥ देवानाꣳसख्यमुपसेदिमावयन्देवानऽआयुꣳप्रतिरन्तुजीवसे ॥ १५/२५ ॥ तान्पूर्वयानिविदाहूमहेवयम्भगम्मित्रमदितिन्दक्षमस्त्रिधम् ॥ अर्य्यमणंवरुणꣳसोममश्विनासरस्वतीनꣳसुभगामयस्करत् ॥ १६/२५ ॥ तन्नोवातोमयोभुवातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणꣳ सोमसुतोमयोभुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम् ॥ १७/२५ ॥ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धꣳस्वस्तये ॥ १८/२५ ॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाꣳस्वस्तिनः पूषाविश्ववेदाꣳ ॥ स्वस्तिनस्ताक्ष्योऽअरिष्टनेमिꣳस्वस्तिनोबृहस्पतिर्दधातु ॥ १९/२५ ॥ पृषदश्वामरुतꣳपृश्निमातरꣳशुभंयावानोविदथेषुजग्मयꣳ ॥ अग्निजिह्वामनवꣳसूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ॥ २०/२५ ॥ भद्रङ्कर्णेभिꣳशृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राꣳ ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ २१/२५ ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमद्ध्यारीरिषतायुर्गन्तोꣳ ॥ २२/२५ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः ॥ विश्वेदेवाऽअदितिꣳपञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम् ॥ २३/२५ ॥ द्यौःशान्तिरन्तरिक्षꣳशान्तिः पृथिवीशान्तिरापꣳशान्तिरोषधयꣳशान्तिः ॥ वनस्पतयꣳशान्ति-

विश्वेदेवाः शान्तिर्ब्रह्मशान्तिꣳसर्वꣳशान्तिꣳशान्तिरेवशान्तिꣳसामाशान्तिरेधि ॥ १७/३६ ॥ यतोयतꣳसमीहसेततोनोऽअभयङ्कुरु ॥ शन्नःकुरुप्र-जाभ्योभयन्नꣳपशुभ्यः ॥ २२/३६ ॥ सुशान्तिर्भवतु ॥

देवतानमस्कारः—श्रीमन्महागणाधिपतयेनमः इष्टदेवताभ्योनमः कुलदेवताभ्योनमः ग्रामदेवताभ्योनमः स्थानदेवताभ्योनमः वाणीहिरण्यगर्भाभ्यांनमः श्रीलक्ष्मीनारायणाभ्यांनमः श्रीउमामहेश्वराभ्यांनमः शचीपुरन्दराभ्यांनमः मातापितृचरणकमलेभ्योनमः सर्वे-भ्योदेवेभ्यो नमः श्रीगुरुभ्योनमः परमगुरुभ्योनमः परमेष्ठिगुरुभ्योनमः परात्परगुरुभ्योनमः सर्वेभ्योब्राह्मणेभ्योनमोनमः निर्विघ्नमस्तु ॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमेतथा । सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ शुक्लाम्बरधरं देवं शशि-वर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ सर्वमङ्गलमाङ्गल्येशिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तुते ॥ सर्वदासर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥ तदेवलग्नंसुदिनंतदेव ताराबलंचन्द्रबलंतदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र-श्रीर्विजयो भूतिर्ध्रुवानीतिर्मतिर्मम ॥ सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् । सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥

सङ्कल्पः—ॐविष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मणः द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे प्रथमचरणे भरतवर्षे जम्बुद्वीपे रामक्षेत्रे परशुरामाश्रमे दण्डकारण्यदेशे श्रीगोदावर्याः पश्चिमदि-

ग्भागे श्रीमल्लवणाब्धेरुत्तरेतीरे अमुके श्रीशालिवाहनशके अमुकनामसंवत्सरे तथा अमुके श्रीविक्रमवर्षे अमुकनामसंवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकराशिस्थितेचन्द्रे अमुकराशिस्थितेश्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं गुणविशेषणविशिष्टायां शुभपुण्यतिथौ ममात्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम सुतस्य करिष्यमाण उपनयने[१] ग्रहानुकूलतासिध्यर्थं मण्डपस्थापनपूर्वकं ग्रहशान्तिं करिष्ये ॥

पुनर्जलमादाय—तदङ्गतया गणपतिपूजनं स्वस्तिपुण्याहवाचनं अविघ्नपूजनं मण्डपदेवतापूजनं मातृकापूजनं वसोर्द्धारापूजनं आयुष्यमन्त्रजपं नान्दीश्राद्धश्चाहं करिष्ये ॥ पुनर्जलमादाय तत्रादौ दिग्रक्षणं कलशार्चनं च करिष्ये ।

दिग्रक्षणम्—वामहस्ते गौरसर्षपान्गृहीत्वा—ॐ रक्षोहणंवलगहनंवैष्णवीमिदमहन्तंवलगमुत्किरामियम्मेनिष्ट्योयममात्योनिचखानेदमहन्तंवलगमुत्किरामियम्मेसमानोयमसमानोनिचखानेदमहन्तंवलगमुत्किरामियम्मेसबंधुर्य्यमसबन्धुर्निचखानेदमहन्तंवलगमुत्किरामियंम्मसजातोयमसजातोनिचखानोत्कृत्याङ्किरामि ॥ २३/५ ॥ रक्षोहणोवोवलगहनंप्प्रोक्षामिवैष्णवान्रक्षोहणोवोवलगहनोवनयामिवैष्णवान्रक्षोहणोवोवलगहनोवस्तृणामिवैष्णवान्रक्षोहणौवांवलगहनाऽउपदधामिवैष्णवीरक्षोहणौवांवलगहनौपर्य्यूहामिवैष्णवीवैष्णवमसिवैष्णवास्त्थ— ॥ २५/५ ॥ रक्षसांभागोसिनिरस्तꣳरक्षऽइदमहꣳरक्षोभितिष्ठामीदमहꣳरक्षोवबाधऽइदमहꣳरक्षोधमन्तमोनयामि ॥ घृतेनद्यावापृथिवीप्प्रोर्णुवाथांवायोवेस्तोकानामग्निराज्ज्यस्यवेतुस्वाहास्वाहाकृतेऽऊर्ध्वनभसम्मारुतङ्गच्छतम् ॥ १६/६ ॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहते ॥ द्रोणेसधस्थमासदत् ॥ २६/२६ ॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ अपक्रामन्तु भूतानि पिशाचाः सर्व-

---

१ अथवा करिष्यमाण मम सुतस्य विवाहे अथवा सुतायाः विवाहे ॥ इत्थं कर्मानुसारेणोच्चारणम् ॥ २ ॥ यदि ग्रहशान्तिकरणपूर्वदिने मण्डपस्थापनं कृतं चेदत्र मण्डपस्थापनपूर्वकं इति न वाच्यं ग्रहशान्तिं करिष्ये इत्येवोहः कार्यः ॥

तो दिशम् । सर्वेषामवरोधेन ग्रहशान्तिं समारभे ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः । ते सर्वेऽप्यपगच्छन्तु ग्रहशान्तिं करोम्यहम् ॥ एतैर्मन्त्रैः सर्वदिक्षु विकिरेत् ॥

**भैरवनमस्कारः**— तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम । भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ वामपादतलपार्श्वेन भूमिं त्रिः प्रहृत्य उदकस्पर्शः ॥

---

**उदकस्पर्शनिर्णयः** ॥ कात्यायनः–रौद्रंराक्षसमासुरमाभिचरणिकंमन्त्रमुक्त्वापित्र्यमात्मानंचालभ्योपस्पृशेदपः ॥ अत्रचकारग्रहणात् तद्दैवत्यंकर्मकृत्वेति कर्कोपाध्यायादयः सर्वेकल्पसूत्रभाष्यकाराः व्याख्यातवन्तः ॥ हेमाद्रौ याज्ञवल्क्योपि–रौद्रपित्र्यासुरान्मन्त्राँस्तथाचैवाभिचारकान् । व्याहृत्यालभ्य चात्मानमपः स्पृष्ट्वान्यमाचरेत् ॥ अपामुपस्पर्शनं आचमनमिति हेमाद्रिणाव्याख्यातं लिङ्गात् ॥ प्राङ्तिष्ठन्नप उपस्पृशतीति प्रवृत्य तेन पूतिरन्तरतोमेध्यावाआपोमेध्योभूत्वा व्रतमुपायानीति ॥ आलम्भमात्रं वा आचमनानुपदेशात्तस्य च नैमित्तिकत्वाच्छब्दसामर्थ्याच्च ॥ अप उपस्पृशतीति लिङ्गमर्थवादमात्रं दीक्षास्नानवदिति कर्कः ॥ छन्दोगपरिशिष्टेकात्यायनः-पित्र्यमन्त्रानुद्रवणे आत्मालम्भेह्यवेक्षणे । अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥ मार्जारमूषकस्पर्शे ह्याक्रुष्टे क्रोधसम्भवे । निमित्तेष्वेषु सर्वत्र कर्म कुर्वन्नपः स्पृशेत् ॥ अनुद्रवणमुच्चारणम् ॥ आत्मालम्भो हृदयस्पर्शः ॥ अवेक्षणमपि तस्यैव ॥ अत्रापित्र्यमन्त्रोच्चारणात्मालम्भावेक्षणानि यज्ञादौ विहितान्येव ग्राह्याणि न लौकिकानि ॥ प्रहासे महति हासे न स्मितमात्रे ॥ मार्जारस्य मार्जारकृत एव ॥ स्वयंकृते तु स्नानस्योक्तत्वादित्युक्तमाचारादर्शे ॥ आक्रुष्टे परुषभाषणे ॥ क्रोधसम्भवो मानसिकोपि ॥ हेमाद्रौ बृहस्पतिनाप्येवमेवोक्तम् ॥ अपः स्पृशेदित्यनेनापांस्पर्शमेव विवक्षितं न त्वाचमनमिति ॥ भर्तृयज्ञपितृभूतिकर्कोपाध्यायवासुदेवगर्गश्रीअनन्तदेवयाज्ञिकादयः सर्वे कल्पसूत्रभाष्यकाराः व्याख्यातवन्तः ॥ संप्रदायादयः पद्धतिकाराश्च ॥ अत्र सर्वेषु वाक्येष्वपः स्पृशेदिति पाठादपःस्पर्शो जलस्पर्श एव याज्ञिकसम्प्रदायाविरुद्धः ॥ येषु तु उपस्पृशेदिति पाठस्तत्र तु उपस्पर्शनं आचमनमित्युक्तमाचारादर्शे ॥ आपस्तम्बः–स्वप्ने क्षवथौ श्वालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं गत्वा अमेध्यं चोपस्पृश्याप्रयतं च मनुष्यं नीवीं च परिधायापउपस्पृशेत् ॥ हेमाद्रौ मार्कण्डेयपुराणे–क्षुतादौ सम्यगाचामेत्स्पृशेद्वार्द्रतृणादिकम् ॥ कुर्वीतालम्भनं वापि दक्षिणश्रवणस्य वै ॥ यथाविभवतो ह्येतत्पूर्वालाभे ततः परम् ॥ न विद्यमाने पूर्वत्र ह्युत्तरप्राप्तिरिष्यते ॥ वसिष्ठः–क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने ॥ पञ्चस्वेतेषु चाचामेच्छ्रोत्रं वा दक्षिणं स्पृशेत् ॥ पराशरः–क्षुते निष्ठीविते चैव दन्तश्लिष्टे तथानृते ॥ पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत ॥ मदनरत्ने बौधायनः–प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ॥ विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत् ॥ आदित्यो वरुणः सोमो वह्निर्वायुस्तथैवच ॥ विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः ॥

कलशार्चनम्—स्ववामभागे पूजार्थजलपूरितकलशं संस्थाप्य तत्र वरुणावाहनम्—तत्त्वायामीत्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो देवता वरुणावाहने विनियोगः—ॐतत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽ आयुःप्रमोषीः ॥ ४९/१८ ॥ ॐभूर्भुवः स्वः अस्मिन्कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकं आवाहयामि स्थापयामि ॥ प्रतिष्ठापनम्—ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामोꣳप्रतिष्ठ ॥ ॥ १३/२ ॥ ॐवरुणायनमः सुप्रतिष्ठितो वरदो भव ॥ कलशाभिमन्त्रणपूर्वकदेवतावाहनम्—अनामिकया कलशं स्पृष्ट्वा—कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः । अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः ॥ अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा । आयान्तु देवपूजार्थं दुरितक्षयकारकाः ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । कावेरि नर्मदे सिन्धो जलेऽस्मिन्सन्निधिं कुरु ॥ ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे । तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥ पूजनम्—पूर्वे ऋग्वेदाय नमः ॥ दक्षिणे यजुर्वेदाय नमः ॥ पश्चिमे सामवेदाय नमः ॥ उत्तरे अथर्वणवेदाय नमः ॥ कलशमध्ये अपाम्पतये वरुणाय नमः ॥ कलशाधिष्ठातृदेवताभ्योनमः ध्यायामि ॥ कलशाधिष्ठातृदेवताभ्यो नमः आसनार्थे अक्षतान्समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्यो नमः पाद्यं समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्यो नमः अर्घ्यं समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्यो नमः आचमनीयं समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्यो नमः स्नानं समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्यो नमः वस्त्रार्थमक्षतान्समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्यो नमः यज्ञोपवीतार्थमक्षतान्समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्योनमः गन्धं समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्योनमः अक्षतान् समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्योनमः पुष्पाणि समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्यो नमः सौभाग्यद्रव्याणि समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्योनमः धूपं आघ्रापयामि ॥ कलशाधिष्ठातृदेवताभ्योनमः

दीपं दर्शयामि॥कलशाधिष्ठातृदेवताभ्यो नमः नैवेद्यं समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्यो नमः सपूगीफलताम्बूलं समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्यो नमः हिरण्यगर्भदक्षिणां समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्यो नमः नीराजयामि ॥ मन्त्रपुष्पाञ्जलिः—तत्त्वायामि० ॥ कलशाधिष्ठातृदेवताभ्यो नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्यो नमः प्रार्थनापूर्वकं नमस्करोमि ॥ अनया पूजया कलशाधिष्ठातृदेवताः साङ्गाः सपरिवाराः प्रीयन्ताम् ॥ कलशं प्रार्थयेत्—देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम्॥त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः। त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः॥शिवः स्वयं त्वमेवाऽसि विष्णुस्त्वं च प्रजापतिः।आदित्यावसवोरुद्रा विश्वेदेवाःसपैतृकाः॥त्वयि तिष्ठन्ति सर्वेऽपि यतःकामफलप्रदाः॥ त्वत्प्रसादादिमां पूजां कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा॥अङ्कुशमुद्रया सर्वाणि तीर्थानि ध्यात्वा वं इति धेनुमुद्रया अमृतीकृत्य हूँ इति कवचेनावगुण्ठ्य मत्स्यमुद्रयाऽऽच्छाद्य वंवरुणायनमः इत्यनेनाष्टवारमभिमन्त्र्य तस्मादुदकादुदकं गृहीत्वा स्वात्मानं स्वशिरश्च सम्प्रोक्षेत्—ॐ आपो हिष्ठा० ॥ अपवित्रः पवित्रो वा० ॥ पुनःस्वल्पोदकमादाय पूजासम्भारान्सम्प्रोक्ष्य तां च भूमिं सम्प्रोक्ष्य कलशमुद्रां प्रदर्शयेत् ॥

दीपपूजनम्—घृतदीपं प्रज्वाल्य निर्वातस्थले निधाय—ॐअग्निर्ज्योतिषाज्ज्योतिष्मान्रुक्मोवर्चसावर्चस्वान् ॥ सहस्रदाऽअसिसहस्रायत्वा ॥ $\frac{४०}{१३}$ ॥ ॐभूर्भुवः स्वः दीपस्थदेवतायै नमः आवाहयामि सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि नमस्करोमि ॥

गणपतिपूजनम्—ताम्रपात्रे सिद्धिबुद्धिसहितं महागणपतिं संस्थाप्य ध्यानम्—उच्चैर्ब्रह्माण्डखण्डद्वितयसहचरं कुम्भयुग्मं दधानं प्रेङ्खं नागारिपक्षप्रतिभटविकटश्रोत्रतालाभिरामम् । देवं शम्भोरपत्यं भुजगपतितनुस्पर्धिवर्धिष्णुहस्तं ध्याये पूजार्थमीशं गणपतिममलं धीश्वरं कुञ्जरास्यम् ॥ ॐभूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः ध्यायामि ॥ आवाहनम्—ॐगणानान्त्वागणपतिꣳहवामहेप्प्रियाणान्त्वा प्प्रियपतिꣳहवामहेनिधीनान्त्वानिधिपतिꣳहवामहेव्वसोमम ॥ आहमजानिगर्ब्भधमात्वमजासिगर्ब्भधम् ॥ $\frac{१९}{२३}$ ॥ ॐभूर्भुवः स्वः सिद्धिबुद्धि-

सहितमहागणपतये नमः गणपतिं आवाहयामि॥आसनम्—ॐवर्ष्मोऽस्मिसमानानामुद्यतामिवसूर्यः। इमन्तमभितिष्ठामियोमाकश्चाभिदासति॥ ॐभूर्भुवः स्वः सि० म० आसनं समर्पयामि ॥ पाद्यम्—ॐएतावानस्यमहिमातोज्ज्यायाँश्चपूरुषः॥पादोस्यविश्वाभूतानित्रिपादस्यामृतन्दिवि ॥ ३/३१ ॥ ॐभूर्भुवः स्व० सि० म० पाद्यं समर्पयामि ॥ अर्घम्—ॐधामन्तेविश्वम्भुवनमधिश्रितमन्तःसमुद्रेहृद्यन्तरायुषि ॥ अपामनीकेसमिथेयऽआभृतस्तमश्यामामधुमन्तन्तऽऊर्म्मिम् ॥ ९९/१७ ॥ ॐभू० सि० म० अर्घं स० ॥ आचमनीयम्—ॐइमम्मेवरुणश्रुधीहवमद्याचमृडय॥त्वामवस्युराचके ॥ १/२१ ॥ ॐभू० सि० म० आचमनीयं स० ॥ पयःस्नानम्—ॐपयसोरूपंयद्यवादध्नोरूपङ्कर्कन्धूनि ॥ सोमस्यरूपंवाजिनꣳसौम्म्यस्यरूपमामिक्षा ॥ २३/१९ ॥ ॐभूर्भुवः स्वः सि० म० पयःस्नानं स० । पयःस्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं स० ॥ दधिस्नानम्—ॐदधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूꣳषितारिषत् ॥ ३२/२३ ॥ ॐ भू० सि० म० दधिस्नानं स० । दधिस्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं स० । घृतस्नानम्—घृतेनाञ्जन्त्सम्पथोदेवयानान्प्रजानन्वाज्ज्यप्प्येतुदेवान् ॥ अनुत्वासप्तेप्रदिशःसचन्ताꣳस्वधामस्मैयजमानायधेहि ॥ २/२९ ॥ ॐभू० सि० म० घृतस्नानं स० । घृतस्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं स० ॥ मधुस्नानम्—स्वाहामरुद्भिःपरिश्रीयस्वदिवꣳसꣳस्पृशस्पाहि ॥ मधुमधुमधु ॥ १३/३७ ॥ ॐभूर्भुवःस्वः सिद्धिबुद्धिसहितमहागणपतये नमः मधुस्नानं स० । मधुस्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं स० ॥ शर्करास्नानम्—ॐअपाꣳरसमुद्वयसꣳसूर्य्येसन्तꣳसमाहितम् ॥ अपाꣳरसस्ययोरसस्तम्वोगृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्म्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ ३/९ ॥ ॐभू० सि० म० शर्करास्नानं स० । शर्करास्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं स० ॥ गन्धोदकस्नानम् ॐगन्धर्वस्त्वाविश्वावसुःपरिदधातुविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः॥ ३/२ ॥ ॐभू० सि० म० गन्धोदकस्नानं स० । गन्धोदकस्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं

स० ॥ उद्वर्तनस्नानम्—ॐअ॒ꣳशुना॑ते॒ऽअ॒ꣳशुः॒ पृच्च्य॑तां॒ परु॑षा॒परु॑ः ॥ ग॒न्धस्ते॒सोम॑मवतु॒मदा॑य॒रसो॒ऽअच्यु॑तः ॥ $\frac{२७}{२०}$ ॐभू० सि० म० उद्व-
र्तनस्नानं स० । उद्वर्तनस्नानान्ते शुद्धोदकस्नानं स० शुद्धोदकस्नानान्ते आचमनीयं स०॥सर्वोपचारार्थेगन्धाक्षतपुष्पाणि समर्प्य निर्मा-
ल्यमुत्तरे विसृज्य अभिषेकः ॐनमस्तेगणपतये त्वमेव प्रत्यक्षंतत्त्वमसि त्वमेवकेवलं कर्त्तासि त्वमेवकेवलं धर्त्तासि त्वमेवकेवलं हर्तासि त्वमेवसर्वं
खल्विदं ब्रह्मासि त्वं साक्षादात्मासिनित्यं ऋतं वच्मि सत्यंवच्मि अवत्वंमां अववक्तारं अवश्रोतारं अवदातारं अवधातारं अवानूचानमव शिष्यं
अवपश्चात्तात् अवपुरस्तात् अवोत्तरात्तात् अवदक्षिणात्तात्अवचोर्ध्वात्तात् अवाधरात्तात् सर्वतोमांपाहिपाहिसमन्तात् त्वंवाङ्मयस्त्वंचिन्मयः त्वमा-
नन्दमयस्त्वंब्रह्ममयः त्वंसच्चिदानन्दाद्वितीयोसि त्वं प्रत्यक्षं ब्रह्मासि त्वंज्ञानमयोविज्ञानमयोसि सर्वंजगदिदं त्वत्तोजायते सर्वंजगदिदं त्वत्तास्ति
ष्ठति सर्वंजगदिदं त्वयिलयमेष्यति सर्वंजगदिदं त्वयिप्रत्येति त्वं भूमिरापोनलोनिलोनभः त्वंचत्वारिवाक्पदानि त्वं गुणत्रयातीतः त्वं अवस्था
त्रयातीतः त्वं देहत्रयातीतः त्वंकालत्रयातीतः त्वं मूलाधारस्थितोसिनित्यं त्वंशक्तित्रयात्मकः त्वांयोगिनोध्यायन्तिनित्यं त्वंब्रह्मात्वंविष्णु-
स्त्वंरुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वंवायुस्त्वंसूर्यस्त्वंचन्द्रमास्त्वंब्रह्म भूर्भुवःस्वरोम् गणादीन्पूर्वमुच्चार्य वर्णादींस्तदनन्तरं अनुस्वारः परतरः अर्धेन्दुल-
सितं तारेणरुद्धं एतत्तवमनुस्वरूपम् गकारःपूर्वरूपं अकारो मध्यमरूपं अनुस्वारश्चान्त्यरूपं बिन्दुरुत्तररूपं नादः सन्धानं सꣳहितासन्धिः
सैषागणेशविद्या गणकऋषिः निचृद्गायत्रीछन्दः गणपतिर्देवता ॐगंगणपतयेनमः।एकदन्ताय विद्महे वक्रतुण्डायधीमहि तन्नोदन्तिः प्रचोदयात्॥
एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् । रदंचवरदंहस्तैर्बिभ्राणं मूषकध्वजम् ॥ रक्तंलम्बोदरंशूर्पकर्णकंरक्तवाससम् । रक्तगन्धानुलिप्ताङ्गं
रक्तपुष्पैः सुपूजितम् ॥ भक्तानुकम्पिनंदेवं जगत्कारणमच्युतम् । आविर्भूतंचसृष्ट्यादौ प्रकृतेः पुरुषात्परम्॥ एवं ध्यायति योनित्यं सयोगी
योगिनां वरः॥ नमोव्रातपतये नमोगणपतये नमः प्रमथपतये नमस्ते अस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्तयेनमः
ॐअमृताभिषेकोऽस्तु ॐभूर्भुवःस्वःसि०म०अभिषेकस्नानं समर्पयामि ॥ शुद्धोदकस्नानम्—ॐशुद्धवा॑लꣳस॒र्वशु॑द्धवालोम॒णिवा॑ल॒स्तऽआ॑श्वि॒नाः

श्येतः श्येताक्षोरुणस्तेरुद्रायपशुपतयेकर्णायामाऽअवलिप्तारौद्रानभोरूपाꣳपार्ज्जन्या? ॥ ३/२४ ॥ ॐभूर्भुवः स्वः सिद्धिबुद्धिसहित म० शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ वस्त्रेण प्रमृज्य रक्तवस्त्रप्रसारिते मृन्मये पीठे पट्टे वाअरुणाक्षतैर्गोधूमैर्वा कृतेऽष्टदले पद्मे गन्धानुलेपनपूर्वकं संस्थाप्य वस्त्रम्—ॐसुजातोज्ज्योतिषासहशर्म्मवरूथमासदत्स्वः ॥ वासोऽअग्नेविश्वरूपꣳसंव्ययस्वविभावसो ॥ ४०/११ ॥ ॐभू० सि० म० वस्त्रं स० ॥ वस्त्रान्ते आ० स० ॥ उपवीतम्—यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ ॐभूर्भुवःस्वः सि०म०यज्ञो०समर्पयामि ॥ यज्ञोपवीतान्ते आ० स० ॥ गन्धम्—ॐत्वाङ्गन्धर्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधेसोमोराजाविद्वान्यक्ष्मादमुच्यत ॥ ९८/१२ ॥ॐभू० सि० म० गन्धं स० ॥ अक्षताः—ॐअक्षन्नमीमदन्तह्यवप्रियाऽअधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठयामतीयोजान्विन्द्रतेहरी ॥ ५१/३ ॥ ॐभू० सि० म० अक्षतान्स० ॥ पुष्पाणि—ॐओषधीꣳप्रतिमोदध्वम्पुष्पवतीꣳ प्रसूवरीꣳ ॥ अश्वाऽइवसजित्वरीर्वीरुधः पारयिष्ण्वः ॥ ॐभूर्भुवःस्वः सि० म० पुष्पाणि स० ॥ दूर्वाङ्कुराः—काण्डात्काण्डात्प्ररोहन्तीपरुषꣳपरुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ २०/१३ ॥ ॐभू० सि० म० दूर्वाङ्कुरान्स० ॥ सौभाग्यद्रव्याणि—ॐअहिरिवभोगैः पर्य्येतिबाहुञ्ज्यायाहेतिम्परिबाधमानꣳ ॥ हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमाꣳसम्परिपातुविश्वतः ॥ ५१/२९ ॥ ॐभू० सि० म० सौभाग्यद्रव्याणि स० ॥ धूपम्—ॐअश्वस्यत्वावृष्णः शक्राधूपयामिदेवयजनेपृथिव्याः ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ अश्वस्यत्वावृष्णः शक्राधूपयामिदेवयजनेपृथिव्याः ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ अश्वस्यत्वावृष्णः शक्राधूपयामिदेवयजनेपृथिव्याः ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ ९/३७ ॥ ॐ भू० सि० म० धूपमाघ्रापयामि ॥ दीपम्—ॐचन्द्रमाऽअप्स्वन्तरासुपर्णोधावतेदिवि ॥ रयिम्पिशङ्गम्बहुलम्पुरुस्पृहꣳहरिरेतिकनिक्रदत् ॥ ९०/३३ ॥ ॐ भू० सि० म० दीपं दर्शयामि ॥ नैवेद्यम्—अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारन्तारिषऽ

ऊर्जन्नोधेहिद्विपदेचतुष्पदे ॥ $\frac{८३}{११}$ ॥ गायत्रीमन्त्रेणसम्प्रोक्ष्य धेनुमुद्रांप्रदर्श्यग्रासमुद्रया—ॐप्राणायस्वाहा ॐअपानायस्वाहा ॐव्यानायस्वाहा ॐउदानायस्वाहा ॐसमानायस्वाहा ॐभूर्भुवःस्वः सि० म० नैवेद्यंनिवेदयामि॥पूर्वापोशनं स० ॥ नैवेद्यंमध्येपानीयम्—एलोशीरलवङ्गादि-कर्पूरपरिवासितम् । प्राशनार्थं कृतं तोयं गृहाण परमेश्वर ॥ॐभू० सि० म० मध्येपानीयं स० उत्तरापोशनं स० हस्तप्रक्षालनं स० मुख-

---

१ नैवेद्यविचारः शारदातिलके—स्वादूपदंशंविमलंपायसंसहशर्करम् । कदलीफलसंयुक्तंसाज्यंमंत्रीनिवेदयेत् ॥ तत्रतत्रजलंदद्यादुपचारान्तरान्तरम् ॥ नैवेद्य-लक्षणम्—निवेदनयियद्द्रव्यंप्रशस्तंप्रयतंतथा ॥ तद्भक्ष्यार्हंपञ्चविधंनैवेद्यमितिकथ्यते ॥ भक्ष्यंभोज्यंचलेह्यंचपेयंचूष्यं च पंचमम् । सर्वत्रचैतन्नैवेद्यमाराध्यास्येनिवेदयेत् ॥ नैवेद्यपात्राणि—तैजसेषु च पात्रेषु सौवर्णे राजते तथा । ताम्रे वा प्रस्तरे वापि पद्मपत्रेथवा पुनः ॥ यज्ञदारुमयेवापि नैवेद्यंस्थापयेद्बुधः । सर्वाऽभावेचमाहेये स्वहस्तघटितेयदि ॥ नैवेद्यकालः—अर्वाग्विसर्जनाद्द्रव्यंनैवेद्यंसर्वमुच्यते । विसर्जितेजगन्नाथेनिर्माल्यं भवति क्षणात् ॥ नैवेद्यस्थापनक्रमोगौतमीये—नैवेद्यंदक्षिणेभागे पुरतो वानपृष्ठतः । दक्षिणं तु परित्यज्य वामे चैवनिधापयेत् ॥ अभोज्यं तद्भवेदन्नं पानीयं च सुरोपमम् ॥ आह्निकतत्त्वे—तृषार्ताः पशवो रुद्धाः कन्यका च रजस्वला । देवताचसनिर्माल्याहन्तिपुण्यं-पुराकृतम् ॥ देवलः—चाण्डालेनशुनावापि दृष्टंहविरयाज्ञिकम् । बिडालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत् ॥ पद्मपुराणे—हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करम् । नैवेद्यं देवदेवाय यावकं पायसं तथा ॥ नैवेद्यवस्त्वलाभे तु फलानि च निवेदयेत् । फलानामप्यलाभे तु तोयान्यपिनिवेदयेत् ॥ नैवेद्यभक्षणाभक्षणविचारः कालिकापुराणे—यो यद्देवार्चनरतः स तन्नैवेद्यभक्षकः । केवलंसौरशैवेतु वैष्णवो नैवभक्षयेत् । समानं त्वन्यनैवेद्यंभक्षयेदन्यदैवतः ॥ शिवनैवेद्येविशेषः भविष्ये—शालग्रामोद्भवेलिंगे बाणलिंगे स्वयंभुवि । रसलिंगे तथार्षे च सुप्रसिद्धप्रतिष्ठिते ॥ हृदयेचन्द्रकान्तेचस्वर्णरौप्यादिनिर्मिते । चान्द्रायणसमंज्ञेयं शम्भोर्नैवेद्यभक्षणम् ॥ लिंगे स्वयंभुवे बाणे रत्न-जेरसनिर्मिते । सिद्धप्रतिष्ठिते चैव नचण्डाधिकृतिर्भवेत् ॥ यत्र चण्डाधिकारोस्ति तद्भोक्तव्यं न मानवैः । चण्डाधिकारोनोयत्रभोक्तव्यं तत्रभक्तितः ॥ हेमाद्रौपरिशिष्टे—अग्राह्यं शिवनैवेद्यंपत्रं पुष्पं फलं जलम् । शालग्रामशिलासङ्गात्सर्वंयातिपवित्रताम् ॥ पुरश्चरणचन्द्रिकायाम्—सुषुम्नावर्त्मना पुष्पमाघ्रायोद्वासयेत्सुधीः । निर्माल्यं मस्तके धार्यं सर्वाङ्गेष्वनुलेपनम् ॥ नैवेद्यं चोपभुंजीत दत्वा तद्भक्तिशालिने ॥ ( भक्तिशालिनेविष्वक्सेनायेत्यर्थः ) गौतमीये—गणेशे वक्रतुंडाय सूर्येचण्डांशवेऽर्पयेत् । विष्णौतुविष्व-क्सेनाय शिवे चण्डेश्वराय च ॥ शक्त्युच्छिष्टंशेसिकायैदद्यादर्चनसिद्धये । अन्यथानैवसिद्धिः स्यादर्चको नरकं व्रजेत् ॥ देवनिर्माल्यत्यागेदोषः रुद्रयामले—निवेदितं च यदद्रव्यं भोक्तव्यं तद्विधानतः । तन्नचेद्भुज्यते मोहाद्भोक्तुमायान्ति देवताः ॥

प्रक्षालनं स० आचमनीयं स० करोद्वर्तनार्थेगन्धं स० ॥ मुखवासार्थेताम्बूलं—ॐउतस्मास्यद्रवतस्तुरण्यतऽपर्णन्नवेरनुवातिप्रगर्द्धिनः ॥श्येनस्येवध्रजतोअङ्कसम्परिदधिक्राव्णःसहोर्जातरित्रतꣳस्वाहा॥ १५/९ ॥ॐभू०सि०म०ताम्बूलं स० ॥ फलम्—ॐयाꣳफलिनीर्य्याऽअफलाऽअपुष्पायाश्चपुष्पिणीꣳ ॥ बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वꣳहसꣳ॥ ८९/१२ ॥ ॐ भू० सि० म० फलं स० ॥ दक्षिणा-ॐयद्दत्तंय्यत्परादानंयत्पूर्तंय्याश्चदक्षिणाꣳ ॥ तदग्निर्वैश्वकर्मणऽस्वर्द्देवेषुनोदधत् ॥ ६४/१८ ॥ ॐ भू० सि० म० सुवर्णपुष्पदक्षिणां स० ॥ कर्पूरारार्तिक्यम्-ॐआरात्रिपार्थिवꣳरजः पितुरप्रायिधामभिꣳ ॥ दिवऽसदाꣳसिबृहतीवितिष्ठसऽआत्वेषंवर्त्ततेतमः ॥ ३२/३४ ॥ ॐ भू० सि० म० कर्पूरारार्तिक्यं दर्शयामि ॥ मन्त्रपुष्पाञ्जलिः-अञ्जलौपुष्पाण्यादायतिष्ठन्—ॐनमोगणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमꣳ ॥ २५/१६ ॥ ॐभूर्भुवःस्वःसिद्धिबुद्धिसहित म० मन्त्रपुष्पाञ्जलिं समर्पयामि ॥ प्रदक्षिणा—ॐसप्तास्यासन्परिधयस्त्रिऽसप्तसमिधःकृताऽ ॥ देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥ १५/३१ ॥ ॐ भू० सि० म० प्रदक्षिणां स० ॥ अर्घपात्रे जलं प्रपूर्य रक्तचन्दनपुष्पाक्षतसहितं नारिकेलं च धृत्वा विशेषार्घः—रक्षरक्षगणाध्यक्ष रक्षत्रैलोक्यरक्षक।भक्तानामभयंकर्ता त्राताभवभवार्णवात्॥द्वैमातुरकृपासिन्धो षाण्मातुराग्रजप्रभो। वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥ अनेन सफलार्घेण फलदोऽस्तु सदा मम॥ ॐ भू० सि० म० विशेषार्घं स०॥ प्रार्थना—विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय। नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते॥नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः।नमस्ते रुद्ररूपाय करिरूपाय ते नमः॥ विश्वरूपस्वरूपाय नमस्तेब्रह्मचारिणे। भक्तप्रियाय देवाय नमस्तुभ्यं विनायक॥ लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय। निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा॥ त्वां विघ्नशत्रुदलनेति च सुन्दरेति भक्तप्रियेति सुखदेति वरप्रदेति।विद्याप्रदेत्यघहरेतिच ये स्तुवन्ति तेभ्यो गणेशवरदो भव नित्यमेव॥ॐभूर्भुवः स्वः सि०म०प्रार्थनापूर्वकंनमस्करोमि।अनया पूजया सिद्धिबुद्धिसहितः म० साङ्गः सपरिवारः प्रीयतां न मम॥ इतिगणपतिपूजाप्रयोगः॥

## ॥ अथ पुण्याहवाचनप्रयोगः ॥[1]

स्वपुरतः शुद्धायां भूमौ पञ्चवर्णैस्तन्दुलैर्वाष्टदलं[2] कर्तव्यम् ॥ तत्र भूमिं स्पृष्ट्वा—ॐ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ॥ पिपृतां नो भरीमभिः ॥ $\frac{३२}{८}$ ॥ विश्वाधारासि धरणि शेषनागोपरिस्थिता । उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ तत्र यवप्रक्षेपः—ॐ ओषधयः समवदन्त सोमेन सह राज्ञा ॥ यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि ॥ $\frac{९६}{१२}$ ॥ यवोसि धान्यराजस्त्वं सर्वोत्पत्तिकरः शुभः । प्राणिनां जीवनोपायः कलशाधः क्षिपाम्यहम् ॥ तदुपरि कलशं[3] स्थापनम्—ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः ॥ पुनरूर्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः ॥ $\frac{४२}{८}$ ॥ कलाकला हि देवानां दानवानां कलाकलाः । संगृह्य निर्मितं चैव

१ पुण्याहवाचनसूत्रम्—अथ पुण्याहवाचनमृद्धिपूर्तेष्वृद्धिर्विवाहान्तापत्यसंस्काराः प्रतिष्ठोद्यापनादि पूर्तं तत्कर्मणश्चाद्यन्तयोः कुर्याच्छुचिः स्वलंकृतो वाचयिता तथाभूते सद्मनि मङ्गलसंभारान्संभृत्य ब्राह्मणान्प्रशस्ताँल्लक्षणसंपन्नान्गन्धादिभिरभ्यर्च्य दक्षिणयातोषयेयुरथ ते प्राङ्मुखाः प्रसन्ना दर्भपाणयस्तिष्ठेयुर्दक्षिणतो वाचयितोदङ्मुखः संस्कार्यो वाचयितुर्दक्षिणं पार्श्वमभितिष्ठेयुरथ वाचयिता दर्भपाणिरपां पूर्णं कुंभं स्वर्चितं सपल्लवमुखं धृत्वा तिष्ठन्समाहितो मनः समाधीयतामिति ब्राह्मणान्ब्रूयात्समाहितमनसः स्मः इति प्रतिब्रूयुः प्रसीदन्तु भवन्त इति वाचयिता प्रसन्नाः स्म इतीतरे सर्वे संहत्य शांतिः पुष्टिस्तुष्टिर्वृद्धिरविघ्नमायुष्यमारोग्यं स्वस्ति शिवं कर्म कर्मसमृद्धिर्धर्मसमृद्धिः पुत्रसमृद्धिर्वेदसमृद्धिः शास्त्रसमृद्धिर्धनधान्यसमृद्धिरिष्टसंपदित्येतानि पंचदशास्त्वन्तानि वाक्यान्युक्त्वा तन्नाम्ना कर्मदेवताः प्रीयन्तामिति ब्रूयुरथ वाचयिता पूर्वं तत्तल्लिङ्गमंत्रान्पठित्वा त्रिस्त्रिर्मन्द्रमध्योच्चस्वरैरों पुण्याहं भवन्तो ब्रुवन्त्वों कल्याणं भवन्तो ब्रुवन्त्वों स्वस्ति भवन्तो ब्रुवन्त्वों मृद्धिं भवन्तो ब्रुवन्त्विति ब्रूयात्तापितथा प्रत्येकं प्रतिब्रूयुरों मृध्यतामित्यृद्धौ ब्रूयुरथ प्राङ्मुखमासीनं सामात्यं कर्तारं ब्राह्मणाः सपल्लवदर्भपाणयः शान्तिपवित्रलिङ्गाभिर्ऋग्भिः सिंचेयुः पुरंध्र्यो नीराजनादिमंगलानि कुर्वन्ति ॥ अन्यच्च———पुण्येऽहनि तु संप्राप्ते विवाहे चौलके तथा । व्रतबन्धे च यज्ञादौ तथा च दानकर्मणि ॥ गृहारंभे धनप्राप्तौ तीर्थाभिगमने तथा । नवग्रहमखे शान्तावद्भुतेषु तथैव च ॥ गृहप्रवेशनेचैव ग्रामस्याभिनिवेशने । गजबन्धे तुरंगाणां दासादीनां च संग्रहे ॥ अन्यस्मिन्नपि सर्वस्मिञ्छुभे कर्मणि चोदिते । वाचनीया द्विजाः सर्वे वेदशास्त्रपरायणाः ॥ इति विधानरत्नमालायाम् ॥ अपरं च———संपूज्य गन्धमाल्याद्यैर्ब्राह्मणान्स्वस्तिवाचयेत् । धर्मकर्मणि माङ्गल्ये संग्रामाद्भुतदर्शने ॥ इति व्यासः ॥ एतदेव निरोङ्कारं कुर्यात्क्षत्रियवैश्ययोरिति दानखण्डवचनाद्ब्राह्मणस्यओंकारपूर्वकं क्षत्रियवैश्ययोर्निरोङ्कारं शूद्रस्य स्वस्तिमात्रम् ॥२॥ कलशस्थापनं कार्यं कमलेऽष्टदलेऽमले ॥ इति परशुरामः ॥३॥ क्रमेण कलशं स्थाप्य पूर्णपात्रं च सर्वशः । वरुणं तत्र संपूज्य गङ्गाद्यावाहनादिकम् ॥ स्वर्णं वा राजतं वापि ताम्रमृन्मयजं तु वा । अकालमव्रणं चैव सर्वलक्षणसंयुतम् ॥ पंचाशांगुलवैपुल्यमुत्सेधे षोडशाङ्गुलम् । द्वादशांगुलकं मूलं मुखमष्टाङ्गुलं तथा ॥

कलशं स्थापयाम्यहम् ॥ कलशे जलपूरणम्—ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद ॥ ३६/४ ॥ जीवनं सर्वजीवानां पावनं पावनात्मनाम् । बीजं सर्वौषधीनां च तज्जलं पूरयाम्यहम् ॥ गन्धप्रक्षेपः—ॐ त्वां गन्धर्वा अखनँस्त्वामिन्द्रस्त्वां बृहस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥ ९८/१२ ॥ श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं सुगन्धाय कलशे संक्षिपाम्यहम् ॥ धान्यप्रक्षेपः—ॐ धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा ॥ दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोऽसि ॥ २०/१ ॥ धान्यौषधी मनुष्याणां जीवनं परमं स्मृतम् । क्षिप्तं यत्कार्यसंभूतं कलशे प्रक्षिपाम्यहम् ॥ सर्वौषधीप्रक्षेपः[1]—ॐ या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ॥ मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥ ७५/१२ ॥ सर्वौषध्यः सुगन्धाढ्या दिव्यवृष्टिसमुद्भवाः । कलशाप्यायनकरा औषधीः संक्षिपाम्यहम् ॥ दूर्वाप्रक्षेपः—ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ॥ एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ ॥ २०/१३ ॥ दूर्वे ह्यमृतसंपन्ने शतमूले शताङ्कुरे । शतं मे हर पापानि शतमायुर्विवर्द्धिनी ॥ पञ्चपल्लवप्रक्षेपः[2]—ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ॥ गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ७९/१२ ॥ यज्ञियवृक्षसंभूतान्पल्लवान्सरसाञ्छुभान् । अलंकाराय पञ्चैतान्कलशे संक्षिपाम्यहम् ॥ सप्तमृद्प्रक्षेपः—ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म सप्रथाः ॥ १३/३६ ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् । राज्यस्थानाच्च गोष्ठाच्च मृत्स्नां वै कलशे क्षिपे ॥ फलप्रक्षेपः—ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ ८९/१२ ॥ पूगीफलमिदं दिव्यं पवित्रं पापनाशनम् । पुत्रपौत्रादि फलदं कलशे प्रक्षिपाम्यहम् ॥ पञ्चरत्नप्रक्षेपः[3]—ॐ परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानि दाशुषे ॥ २५/११ ॥ कनकं कुलिशं नीलं पद्मरागं च मौ-

---

१ कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम् । वचा चम्पकमुस्तं च सर्वौषध्यो दशस्मृताः ॥२॥ अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः ॥३॥ कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । अलाभे सर्वरत्नानां हेम सर्वत्र योजयेत् ॥

क्तिकम् । एतानि पञ्चरत्नानि कलशे प्रक्षिपाम्यहम् ॥ हिरण्यप्रक्षेपः—ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ॥ सदाधार पृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ $\frac{४}{१३}$ ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदं कलशे संक्षिपाम्यहम् ॥ रक्तसूत्रेण वस्त्रेण च वेष्टयेत्—ॐ युवासुवासाः परिवीतआगात्सउश्रेयान्भवतिजायमानः॥ तंधीरासःकवयउन्नयन्तिस्त्राध्योमनसादेवयन्तः ॥ पा० गृ०का०२कं०२मं०९॥ सूत्रं कार्पाससंभूतं ब्रह्मणा निर्मितं पुरा । येन बद्धं जगत्सर्वं कलशे वेष्टयाम्यहम्॥ पूर्णपात्रमुपरिन्यसेत्—ॐ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्क्रीणावहाऽइषमूर्ज्जंशतक्रतो ॥ $\frac{४९}{३}$ ॥ धान्यपूर्णमिदं पात्रं स्थापितं कलशे यतः । तेनायं कलशः पूर्णः पूर्णाः सन्तु मनोरथाः । वरुणमावाहयेत्—ॐ तत्त्वायामीत्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणोदेवता वरुणावाहने विनियोगः। ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः ॥ $\frac{४९}{१८}$ ॥ मकरस्थं पाशहस्तमम्भसांपतिमीश्वरम् । आवाहये प्रतीचीशं वरुणं यादसां पतिम्॥ ॐ भूर्भुवः स्वः अस्मिन्कलशे वरुणं साङ्गंसपरिवारं सायुधं सशक्तिकं आवाहयामि स्थापयामि ॥ प्रतिष्ठापनम्—ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञꣳसमिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामो३म्प्रतिष्ठ ॥ $\frac{१३}{२}$ ॥ ॐ वरुणाय नमः सुप्रतिष्ठितो वरदो भव ॥ इति प्रतिष्ठाप्य ॥ ततः ॐ भूर्भुवः स्वः वरुणाय नमः चन्दनं समर्पयामि॥ इत्यादिपञ्चोपचारैः संपूज्य तत्त्वायामीति पुष्पाञ्जलिं समर्प्य अनेन पूजनेन वरुणःप्रीयताम् ॥ ततः अनामिकया[३] कलशं स्पृष्ट्वा अभिमंत्रयेत्—कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूलेतत्रस्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः॥ कुक्षौ तु सागराः सर्वेसप्तद्वीपा वसुंधरा। ऋग्वेदोथ यजुर्वेदः सामवेदोह्यथर्वणः॥ अंगैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः। अत्र गायत्री सावित्री शान्तिः पुष्टिकरीतथा ॥ आयान्तु

---

१ केचन सूत्रवेष्टने—ॐ सुजातोज्ज्योतिषासहशर्म्मवरूथमासदत्स्वः ॥ वासोऽअग्नेविश्वरूपꣳसंव्ययस्वविभावसो ॥ $\frac{४}{११}$ ॥ इति मंत्रं वा पठन्ति ॥ २ ॥ धातुजं मृन्मयं वापि कलशं यत्प्रतिष्ठितम् । तद्वत्प्रादेशदीर्घं च चतुरङ्गुलमुच्छ्रितम् ॥ सिततन्दुलपूर्णं च पूर्णपात्रं प्रकीर्तितम् ॥ ३ ॥ स्पृशन्स्वनामिकाग्रेण क्वचिदालोकयन्नपि । अनुमंत्रणं सर्वत्र सदैवमभिमंत्रयेत् ॥

मम शान्त्यर्थंदुरितक्षयकारका॥ततः गायत्र्यादिभ्यो नमः इत्यनेन पञ्चोपचारैरभ्यर्च्य कलशं प्रार्थयेत्–देवदानवसंवादे मथ्यमाने महोदधौ। उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम्॥त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः। त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः। आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः॥ त्वयि तिष्ठन्ति भूतानि यतः कामफलप्रदाः। त्वत्प्रसादादिदं कर्म कर्तुमीहे जलोद्भव॥सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा॥नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय। सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते॥ पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक। पुण्याहवाचनं यावत्तावत्त्वं सन्निधो भव॥ततः स्वस्तिवाचनार्थं युग्मविप्रान्संपूज्य[1]॥ अवनिकृतजानु[2]मण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेनपाणिनास्वर्णपूर्णकलशंधारयित्वा[3] वदेत्–ॐत्रीणिपदा[4]विचक्रमेविष्णुर्गोपाऽअदाभ्य॑ः॥ अतोधर्माणिधारयन्॥ $\frac{४३}{३४}$॥ विष्णोः पद्भ्यां प्रक्रमेण रक्षा भवति निश्चला। अतस्ताभ्यो हि रक्षाभ्यो धर्मान्संधारयेत्पुमान्॥दीर्घानागानद्यो गिरयस्त्रीणि विष्णुपदानि च तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु॥विप्रा वदेयुः–तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु॥ पुनः–ॐत्रीणितऽआहुर्द्दिविबन्धनानित्रीण्यप्सुत्रीण्यन्तः समुद्रे॥ उतेवमेववरुणश्छन्त्स्यर्वन्यत्रातऽआहुः परमञ्जनित्रम्॥ $\frac{१५}{२९}$॥+मार्कण्डेयप्रसादेन भवंति चिरजीविनः। तथा भवतु दीर्घायुः पुत्रपौत्रगणैर्मम॥ दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिच॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु॥* तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु॥ पुनः–ॐत्रयादेवाऽएकादशत्रयास्त्रिंशाः सुराधसः॥ बृहस्पतिपुरोहितादेवस्यसवितुः सवे॥ देवादेवैरवन्तुमा॥ $\frac{११}{२०}$॥ +दीर्घायुषश्च सूर्याद्या महानद्यो हि पर्वताः। विष्णोः पदप्रमाणेन दीर्घमायुरवाप्नुयाम्॥दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च। तेनायुः-



---

१ अर्चिता ब्राह्मणाः सम्यग्गन्धताम्बूलदक्षिणाः। तिष्ठेयुर्ब्राह्मणाः सम्यग्वक्तारो दर्भपाणयः॥ तिष्ठेद्वाचयिता तेषां दक्षिणस्थ उदङ्मुखः॥२ अवनीगतजानुभ्यां ततो मुकुलपद्मवत्। अंजलिं शिरस्याधाय प्रणमेत्रिः पुनः पुनः॥३ अत्र कलशधारणं आचार्यकर्तृकं धारयित्वेत्युक्तत्वात्॥ परशुरामकारिकायाम्—आचार्य उदकुंभं तं धारयेत्तदनन्तरम्॥ ४ हस्ते कलशमुद्धृत्य नमेत्रीणिपदादिभिः॥ +इति यजमानो वदेत् *इति ब्राह्मणा वदेयुः॥

प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु॥* तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु॥अपां मध्ये स्थिता देवाः सर्वमप्सु प्रति-
ष्ठितम्‌।ब्राह्मणानां करे न्यस्ताः शिवा आपो भवन्तु ताः॥ब्राह्मणानां हस्तेसुप्रोक्षितमस्तु + शिवाआपः सन्तु *सन्तु शिवा आपः+सौमनस्यमस्तु
*अस्तु सौमनस्यम्‌॥ + अक्षतं चारिष्टं चास्तु*अस्त्वक्षतमरिष्टं च॥+गन्धाः पान्तुसौमङ्गल्यंचास्त्वितिभवन्तो ब्रुवन्तु॥* गन्धाः पान्तु सौमङ्गल्यं
चास्तु+अक्षताः पान्तु आयुष्यमस्त्विति भवन्तो ब्रुवन्तु॥*ॐअक्षताः पान्तु आयुष्यमस्तु॥+पुष्पाणि पान्तु सौश्रियमस्त्विति भवन्तो ब्रुवन्तु ॥
* ॐपुष्पाणि पान्तु सौश्रियमस्तु॥+ ताम्बूलानि पान्तु ऐश्वर्यमस्त्विति भवन्तो ब्रुवन्तु॥*ॐताम्बूलानि पान्तु ऐश्वर्यमस्तु ॥+ पूगीफलानि
पान्तु बहुफलमस्त्विति भवन्तो ब्रुवन्तु ॥ * ॐपूगीफलानि पान्तु बहुफलमस्तु ॥ +दक्षिणाः पान्तु बहुदेयं चास्त्विति भवन्तो ब्रुवन्तु ॥
* ॐदक्षिणाः पान्तु बहुदेयं चास्तु॥+ ॐदीर्घमायुः श्रेयः शांतिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रश्चास्त्विति भवन्तो ब्रुवन्तु॥
ब्राह्मण. वेदयुः—ॐदीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिःश्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंचास्तु॥ यजमानो वदेत्‌—यङ्कृत्वा सर्ववेदयज्ञक्रियाकरण-
कमारम्भाः शुभाः शोभनाः प्रवर्त्तन्ते तमहमोङ्कारमादिङ्कृत्वा ऋग्यजुःसामाथर्वणाशीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं
पुण्याहं वाचयिष्ये॥ *ॐवाच्यताम्‌ ॥ अथाशीर्वादः ॥ ब्राह्मणानां हस्तेष्वक्षतान्दद्यात्‌ ॥ यजुः—ॐभद्रङ्कर्णेभिᳫशृणुयामदेवाभद्रम्पं-
श्येमाक्षभिर्य्यजत्राᳫ ॥ स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्यशेमहिदेवहितंय्यदायुः ॥ $\frac{२१}{२५}$ ॥ ॐदेवानाम्भद्रासुमतिर्ऋजूयतान्देवानाᳬ
रातिरभिनोनिवर्त्तताम्‌ ॥ देवानाᳬसक्ख्यमुपसेदिमाव्वयन्देवानऽआयुᳫप्रातिरन्तुजीवसे ॥ $\frac{१५}{२५}$ ॥ ॐदीर्घायुस्तऽओषधेखनिताय-

---

+ इति यजमानो वदेत्‌॥* इति ब्राह्मणा वेदयुः॥१ अत्र शस्तविप्राः—पुण्याहवाचने चैवविप्रा वेदविदः शुभाः। यज्ञोपवीतिनः शस्ताः प्राङ्मुखाः स्युः पवित्रिणः॥गन्धपुष्पार्चिताः शुद्धाः सोत्तरीयाः कुशायुधाः ॥ अत्रवर्ज्यविप्राः—न तत्र कुनखी काणो हीनांगो विकलस्तथा। क्षयरोगी च कुष्ठी च श्यावदन्तोऽभिशापकः॥वन्ध्यश्च विधुरो वापि क्रूरस्तु खलसेवकः। बकवृत्तिश्च दंभी च हेतुको ज्ञानदुर्बलः ॥ सहोपपतिरुन्मत्तो व्यसनी सोमविक्रयी। कन्यागोविक्रयी चैव पिशुनश्चानृतः खलः॥ लोकदुष्टः पराधीनो राजद्रोहपरायणः। वर्ज्याश्चैतादृशा विप्राः स्वस्तिवाचनके सदा ॥

स्म्मैंचत्त्वाखनाम्म्यहम् ॥ अथोत्त्वन्दीर्घायुर्भूत्त्वाशतवल्शाविरोहतात् ॥ १००/१२ । ॐऋक्—द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनं- रस्यप्रयंसत् ॥ द्रविणोदावीरवतीमिषंनोद्रविणोदारासतेदीर्घमायुः ॥ अष्टक १-४/७ ॥ यजुः ॐद्रविणोदाऽपिपीषतिजुहोतप्रचतिष्ठत ॥ नेष्ट्रादृतुभिरिष्यत ॥ २२/२६ ॥ साम—ॐदेवो३वो३द्रविणोदाः । पूर्णाविवष्ट्वासिचं । उद्वा१सिंचा २ । ध्वमुपवापृणध्वं । आदिद्वोदे२ । वओहते । ईडा२३भा३४३ । औ२३४५ई । डा ॥ वेयगानस्य द्वितीयप्रपाठकस्य प्रथमार्द्धे साम२४ ॥ अथर्वणः—ॐधातारातिःसवि- तेदंजुषंताम्प्रजापतिर्निधिपतिर्नोअग्निः ॥त्वष्टाविष्णुःप्रजयासंरराणोयजमानायद्रविणंदधातु का०७अ०२सू०१७मं०४ ऋक्—ॐसवितापुश्चा- तात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः ॥ ७ ११/८ ॥ यजुः—सवि- तात्त्वासवानाᳬसुवतामग्निर्गृहपतीनाᳬसोमोवनस्पतीनाम् ॥ बृहस्पतिर्वाचऽइन्द्रोज्ज्यैष्ठ्यायरुद्रऽपशुभ्योमित्रऽसत्योवरु- णोधर्म्मपतीनाम् ॥ ३९/९ ॥ साम—ॐऊर्द्ध्वऊषुणा२ ऊता२३४याई । तिष्ठादेवोनसविता । ऊर्द्ध्वोवा२३ जा । स्यासनिता । यादंजिभीः । वाघाद्भीः । वीवी२ । ह्वयामा२३हा ३४३ई । उं२३४५ई । डा ॥ वेयगानस्य द्वितीयप्रपाठकस्य प्रथमार्द्धे साम २६ ॥ अथर्वणः—ॐअभयंद्यावापृथिवीइहास्तुनोभयंसोमःसवितानःकृणोतु॥अभयन्नोस्तूर्वाऽन्तरिक्षंसप्तऋषीणांचहविषाभयन्नोऽस्तु का०६अ०४ सू०४०मं०१॥६ १/२०॥ ऋक्—ॐनवोंनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रं ॥ भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायुः ॥८ २३/३ ॥ यजुः—ॐनतद्रक्षाᳬसिनपिशाचास्तरन्तिदेवानामोजःप्रथमजᳬह्येतत् ॥ योबिभर्तिदाक्षायणᳬहिरण्यᳬसदेवेषुकृणुतेदीर्घमायुᳬसमनु- ष्येषुकृणुतेदीर्घमायुः ॥ ५१/३४ ॥ साम—चंद्रमाआउवा । प्सुवान्ताराउवा । सुपर्णो धाउवा । वतेदिवि । न वोहिराउवा । ण्य- नाइमायाउवा । पदंविंदाउवा । तिविद्युताः । वित्तंमाआउवा । स्यरोदा २३ सा ३४३ ई । औ २३४५ई । डा ॥ वेयगानस्य एकाद-

शमपाठकस्य प्रथमार्द्धे साम ३१ ॥ अथर्वणः—नैनंरक्षांसिनपिशाचाःसहंतेदेवानामोजःप्रथमजंह्येतत् ॥ योबिभर्त्तिदाक्षायणंहिरण्यं-सजीवेषुकृणुतेदीर्घमायुः ॥ $१\frac{२}{३५}$ ॥ ऋक्—ॐउच्चादिविदक्षिणावंतोऽअस्थुर्येऽअश्वदाःसहतेसूर्येण ॥ हिरण्यदाऽअमृतत्वंभजंतेवासो-दाःसोमप्रतिरंतऽआयुः ॥ $८\frac{३}{६}$ ॥ यजुः—ॐउच्चातेजातमन्धसोदिविसद्भूम्म्यादंदे ॥ उग्रंशर्म्ममहिश्रवः ॥ $\frac{१६}{२६}$ ॥

५ र २ ४र ५ २ १ २ — १ २ १ २ १ २ २ २र ३ १ १ १ १

साम—उच्चाता ३ ईजातमंधसाः । दिवाई । सा१द्भू२। मिया२३ ददाई । उग्रा॰शर्म्मा । महा२३ईश्रवाउ । वा ३ । स्तौषे२३ ४ ५ ॥ वेयगानस्य द्वादशमपाठकस्य द्वितीयार्द्धे साम १३ ॥ अथर्वणः—ॐउच्चापतन्तमरुणंसुपर्णमध्येदिवस्तरणिंभ्राजमानम् ॥ पश्यामत्वासवितारंयमा-हुरजस्रंज्योतिर्यदविन्ददत्रिः॥ का० १३ अ० २ मं० ३६ करोतु स्वस्तितेब्रह्मास्वस्ति चापि द्विजातयः। सरीसृपाश्च ये श्रेष्ठास्तेभ्यस्ते स्वस्ति सर्वदा ॥ ययातिर्नहुषश्चैव धुन्धुमारो भगीरथः । तुभ्यं राजर्षयः सर्वे स्वस्ति कुर्वन्तु नित्यशः ॥ स्वस्ति तेस्तु द्विपादेभ्यश्चतुष्पादेभ्य एव च । स्वस्त्य-स्त्वपादकेभ्यश्च सर्वेभ्यः स्वस्ति ते सदा ॥ स्वाहा स्वधा शची चैव स्वस्ति कुर्वन्तु ते सदा । करोतु स्वस्ति वेदादि नित्यं तव महामखे ॥ लक्ष्मीर-रुन्धती चैव कुरुतां स्वस्ति तेऽनघ । असितो देवलश्चैव विश्वामित्रस्तथाङ्गिराः॥ वसिष्ठः कश्यपश्चैव स्वास्ति कुर्वन्तु ते सदा । धाता विधाता लोकेशो दिशश्च सदिगीश्वराः ॥ स्वस्ति तेद्य प्रयच्छन्तु कार्तिकेयश्च षण्मुखः । विवस्वान्भगवान्स्वस्ति करोतु तव सर्वदा ॥ दिग्गजाश्चैव चत्वारः क्षितिश्च गगनं ग्रहाः । अधस्ताद्धरणीं चासौ नागो धारयते हिसः ॥ शेषश्च पन्नगश्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु ॥ इत्याशीर्वादः ॥

---

१ अत्र—ॐअहोरात्राभ्यांनक्षत्रेभ्यःसूर्याचन्द्रमसाभ्याम् ॥ भद्राहमस्मभ्यंराजंशकधूमत्वंकृधि ॥ काण्ड ६ अनुवाक १३ सूक्त १२८ मन्त्र ३ इत्यपिपठंति ॥
२ अत्र—ॐउच्चैर्घोषोदुंदुभिःसत्वनायन्वानस्पत्यःसंभृतउस्त्रियाभिः ॥ वाचंक्षुणुवानोदमयन्त्सपत्नान्सिंहइवजेष्यन्नभितंस्तनीहि ॥ का० ५ अ० ४ सू० २० मं० १ इत्यपिमन्त्रं पठति ॥

+व्रतजपनियमतपःस्वाध्यायक्रतुदयादमदानविशिष्टानांसर्वेषांब्राह्मणानांमनः[1]समाधीयताम् ॥ *समाहितमनसः[2]स्मः ॥ +प्रसीदन्तु[3] भवन्तः ॥ प्रसन्नाः[4]स्मः ॥ + ॐशान्तिरस्तु ॥ *अस्तु ॥ ॐपुष्टिरस्तु ॥ ॐतुष्टिरस्तु । ॐवृद्धिरस्तु । ॐअविघ्नमस्तु । ॐआयुष्यमस्तु । ॐआरोग्यमस्तु । ॐशिवंकर्मास्तु । ॐकर्मसमृद्धिरस्तु । ॐवेदसमृद्धिरस्तु । ॐशास्त्रसमृद्धिरस्तु । ॐधनधान्यसमृद्धिरस्तु । ॐपुत्रपौत्रसमृद्धिरस्तु । ॐइष्टसंपदस्तु । ॐअरिष्टनिरसनमस्तु । ॐयत्पापंरोगमशुभमकल्याणंतद्दूरेप्रतिहतमस्तु ॥ ॐयच्छ्रेयस्तदस्तु ॥ ॐउत्तरेकर्मणिनिर्विघ्नमस्तु ॥ ॐउत्तरोत्तरमहरहरभिवृद्धिरस्तु॥ॐउत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यन्ताम् ॥ ॐतिथिकरणमुहूर्तनक्षत्रग्रहलग्नसंपदस्तु ॥ पात्रे उदकसेकः ॥ ॐतिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम्[5] ॥ ॐतिथिकरणे मुहूर्ते सनक्षत्रे सग्रहे साधिदेवते प्रीयेताम् ॥ ॐदुर्गापाञ्चाल्यौ प्रीयेताम् ॥ ॐअग्निपुरोगाविश्वेदेवाः प्रीयन्ताम् ॥ ॐइन्द्रपुरोगामरुद्गणाः प्रीयन्ताम् ॥ ॐमाहेश्वरीपुरोगाउमामातरः प्रीयन्ताम् ॥ ॐअरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् ॥ ॐविष्णुपुरोगाः सर्वेदेवाः प्रीयन्ताम् ॥ ॐब्रह्मपुरोगाः सर्ववेदाः प्रीयन्ताम् ॥ ॐब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् ॥ ॐश्रीसरस्वत्यौ प्रीयेताम् ॥ ॐश्रद्धामेधे प्रीयेताम् । ॐभगवतीकात्यायनी प्रीयताम् ॥ॐभगवती माहेश्वरी प्रीयताम् ॥ॐभगवती ऋद्धिकरी प्रीयताम् ॥ ॐभगवती सिद्धिकरी प्रीयताम् ॥ ॐभगवती पुष्टिकरी प्रीयताम् ॥ ॐभगवती तुष्टिकरी प्रीयताम् ॥ ॐभगवन्तौ विघ्नविनायकौ प्रीयेताम् ॥ ॐसर्वाःकुलदेवताः प्रीयन्ताम् ॥ ॐसर्वाग्रामदेवताः प्रीयन्ताम् ॥ बहिः[6]—ॐहताश्च ब्रह्मद्विषः ॥ॐहताश्च परिपन्थिनः ॥ ॐहताश्च विघ्नकर्तारः ॥ ॐशत्रवः पराभवं यान्तु ॥ॐशाम्यन्तु घोराणि । ॐशाम्यन्तु पापानि ॥ ॐशाम्यन्त्वीतयः । पुनःपात्रे—ॐशुभानि[7] वर्द्धन्ताम् ॥ ॐशिवा आपः

---

+ इति यजमानो वदेत् ॥ * इति ब्राह्मणा वदेयुः ॥ १ अथ वाचयितुर्बाहुं दक्षिणाङ्गसमाश्रितः । मन इत्यादि रूपेण एकाग्रमिति चादिशेत् ॥ २ मनसः स्म इति ब्रूयुस्ते समाहितपूर्वकाः ॥ ३-४ प्रसीदन्त्विति कर्तारः प्रसन्नाः स्म इति द्विजाः + ॐशान्तिरस्त्वित्यादिवाक्यानि यजमानो ब्रूयात् ॥ शान्तिरस्त्वितिविघ्नान्ताः शब्दाः पञ्चदशैव तु । अस्तुवाक्यं द्विजमुखाच्छ्रावयित्वा तथा परैः । षड्वाक्यान्यस्त्विति च इतरैरेकविंशतिः ॥ * अस्तु इति द्विजाः सर्वत्र प्रतिवचनं वदेयुः ॥ ५ प्रीयतां वाक्यपठितैरुदकस्य निषेचनम् ॥ ६ ततः षड्वाक्यपठितैर्बहिरापोनिषेचनम् ॥ ७ अन्ते दशशुभादीनि निकामेति ततो जपः ॥

सन्तु ॥ ॐशिवा ऋतवः सन्तु ॥ ॐशिवा ओषधयः सन्तु ॥ ॐशिवा नद्यः सन्तु ॥ ॐशिवा गिरयः सन्तु ॥ ॐशिवा अतिथयः सन्तु ॥ ॐशिवा अग्नयः सन्तु ॥ ॐशिवा आहुतयः सन्तु ॥ ॐअहोरात्रे शिवे स्याताम् ॥ ऋक्—शन्नः कनिक्रदद्देवःपर्ज्जन्योअभिवर्षतु ॥ शन्नोद्यावापृथिवीशं प्रजाभ्यःशन्नएधिद्विपदेशंचतुष्पदे ॥ ऋ० ब्र० शान्तिपाठे परिशिष्टमन्त्र ८ यजुः—ॐनिकामेनिकामेन ॆपर्ज्जन्योवर्षतुफलवत्योनऽ ओषधय ॆपच्यन्तांयोगक्षेमोनं÷कल्पताम् ॥ $\frac{२२}{२२}$ ॥ ब्राह्मणम्—ॐनिकामेनिकामेन ॆपर्ज्जन्योवर्षतिवितिनिकामेनि १ामेवैतत्रपर्ज्जन्योवर्ष तियत्रैतेनयज्ञेनयजन्तेफलवत्योनऽओषधय ॆपच्यन्तामितिफलवत्योवैतत्रौषधय ॆपच्यन्तेयत्रैतेनयज्ञेनयजन्तेयोगक्षेमोन ॆकल्पतामितियोगक्षे

३ २ ५२ २ ५ ४ ५

मोवैतत्रकल्पतेयत्रैतेनयज्ञेनयजन्तेतस्माद्यत्रैतेनयज्ञेनयजन्तेकम्प ॆप्रजानांयोगक्षेमोभवति ॥ साम—ॐत्वष्टा ३४ । नो दैवियं वचाः।

२ १ र २ १ २ २ १र र २ १ र २ १ २ २ १ २

पर्जन्योब्रह्मणस्पा २३ तीः । पुत्रैर्भ्रातृभिरदितिर्नुपातू २३ नाः । दुष्टरा २३ न्त्रा । मणंवा २३ चा ३४३ : । ओ१ २३४५ इ । डा ॥ वेयगानस्य अष्टमप्रपाठकस्य प्रथमार्द्धस्य साम २० ॥ अथर्वणः—गणास्त्वोपगायन्तुमारुताःपर्ज्जन्यघोषिणः पृथक् ॥ सर्गावर्षस्यवर्षतोवर्षन्तुपृथिवीमनु ॥ का० ४ अ० ३ सू० १५ मं० ४ ॥ ॐशुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् ॥ ॐभगवान्नारायणः प्रीयताम् ॥ ॐभगवान्पर्जन्यः प्रीयताम् । ॐभगवान्स्वामी महासेनः प्रीयताम् ॥ ॐपुरोनुवाक्यया यत्पुण्यं तदस्तु ॥ ॐयाज्यया यत्पुण्यं तदस्तु ॥ ॐवषट्कारेण यत्पुण्यं तदस्तु ॥ ॐप्रातःसूर्योदये यत्पुण्यं तदस्तु ॥×ॐपुण्याहकालान्वाचयिष्ये ॥ *ॐवाच्यताम् ॥×ब्राह्मयं पुण्यं महद्यच्च सृष्ट्युत्पादनकारकम् । वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥ भो ब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य ग्रहशान्त्याख्यस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु ॥

---

१ गुर्जरास्त्वत्र—त्वष्टामेदैव्यंवचःपर्जन्योब्रह्मणस्पतिः ॥ पुत्रैर्भ्रातृभिरदितिर्नुपातुनोदुष्टरंत्रायमाणं सहः का० ६ अ० १ सू० ४ मं० १ इति मन्त्रं पठन्ति ॥

१ शुक्रादयो ग्रहाश्चैकं भगवांस्त्र्यभिषेचनम् ॥ उदकस्य प्रकुर्वीत पुण्याहं वाचयेत्ततः ॥ १ इति यजमानो वदेत् ॥ २ इति ब्राह्मणा वदेयुः ॥

*ॐपुण्याहम् ॥ एवं त्रिः ॥ ऋक्-ॐउद्गातेवशकुनेसामगायसिब्रह्मपुत्रऽइवसवनेषुशंससि ॥ वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद ॥ २ १२/८ ॥ यजुः-ॐपुनन्तुमादेवजनाः पुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदः पुनीहिमा ॥ ३९/१९ ॥ ब्राह्मणम्-ॐसयःकामयेतमहत्प्राप्नुयामित्युदगयनऽआपूर्यमाणपक्षेपुण्याहेद्वादशाहमुपसद्व्रतीभूत्वौदुंबरेकᳬसेचमसेवासर्वौषधम्फलानीतिसम्भृत्यपरिसमुह्यपरिलिप्याग्निमुपसमाधायावृत्ताज्यᳬसंस्कृत्यपुᳬसानक्षत्रेणमन्थᳬसन्नीयजुहोति ॥ साम-ॐपुनानःसोमा३धारा २३४ या । आपोवसानोअर्षस्यारत्नधायोनिमृतस्यसा २ ईद साई । ओहो३उवा । उत्सोदेवोहिरा २३ हाई । ओहा ३ उवा । ण्यया । ओ । ३होवा । हो ५ ई । डा ॥ वेयगानस्य चतुर्दशप्रपाठकस्य प्रथमार्द्धे साम ३५ ॥

अथर्वणः-ॐपुनन्तुमादेवजनाःपुनन्तुमनवोधिया॥ पुनन्तुविश्वाभूतानिपवमानःपुनातुमा॥ का०६अ०२सू० १९ मं० १ दीयन्ते यत्र दानानि पूज्यन्ते च द्विजातयः। दृश्यते तत्र माङ्गल्यं तत्पुण्याहं सदास्तु ते॥+पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम्। ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः॥+भो ब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य ग्रहशान्त्याख्यस्य कर्मणः कल्याणं भवन्तो ब्रुवन्तु॥ *ॐअस्तु कल्याणम्॥ एवं त्रिः॥ ऋक्—ॐअपाःसोमस्तमिन्द्रप्रयाहिकल्याणीर्जायासुरणंगृहेते॥ यत्रारथस्यबृहतोनिधानंविमोचनंवाजिनोदक्षिणावतः॥ ३ २०/३ ॥ यजुः—ॐयथेमांवाचङ्कल्याणीमावदानिजनेभ्यः॥ ब्रह्मराजन्याभ्याᳬशूद्रायचार्य्यायचस्वायचारणायच ॥ प्रियोदेवानान्दक्षिणायैदातुरिहभूयासमयंम्मेकामःसमृद्ध्यतामुपमादोनमतु॥ २/२६ ॥ ब्राह्मणम्—ॐअथाध्वर्योᳬप्रतिगरोरात्सुरिमेयजमानाभद्रमेभ्योयजमानेभ्योभूदितिकल्याणमेवैतन्मानुष्यैवाचोवदति ॥ साम—ॐकाऽ५

१ पुण्याहादि त्रिरावर्त्य मन्द्रमध्योच्चनिस्वनैः। पुण्यं कल्याणमृद्धिश्च स्वस्तिश्रीत्यादि पञ्चकम् ॥ प्रणवाद्यं त्रिराचष्टे भवत्पूर्वं भवन्त्विति। प्रत्युक्तविषये प्रेषस्त्रिवारं स्वस्तिरित्यतः ॥ +इति यजमानो वदेत् ॥ *इति ब्राह्मणा वदेयुः ॥

र ५ ४ २ ४र ५ १ १र र २ १ २ र २ १ २ ३ र २ १
या । नश्वा ३ इत्रा ३ आभूवात् । उ । ती स दा वृध स्स । खा । ओ३ हो हाइ । कया २३ शचा इ । ष्ठयौ हो ३ । हुम्मा
१२ । वाँऽ २ तोँ ३५ होँइ ॥ वेयगानस्य पंचमप्रपाठकस्य प्रथमार्द्धे साम २५ ॥ अथर्वणः —ॐविश्वंजित्कल्याण्यैमापरिंदेहि ॥ कल्याणिद्विपाच्चसर्वन्नोरक्ष ऽतुष्पाद्यच्चनःस्वम्॥ का० ६ अ० ११ सू० १०७ मं० ३ कलत्रपुत्रपौत्रादि द्विपदाश्च चतुष्पदाः। तिष्ठन्ति यत्र भृत्याद्या स्तत्कल्याणं सदास्तुते॥ +सागरस्य यथा वृद्धिर्महालक्ष्म्यादिभिः कृता। संपूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः ॥+ भो ब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य ग्रहशान्त्याख्यस्य कर्मणः ऋद्धिं भवन्तो ब्रुवन्तु ॥ *ॐकर्मऋद्ध्यताम् ॥ एवं त्रिः ॥ ऋक्—ॐऋद्ध्यामस्तोमंसनुयामवाजमानोमंत्रंसरथेहोपयातं ॥ यशोनपक्वंमधुगोष्वंतराभूतांशोऽअश्विनोः काममप्राः ॥ ८ $\frac{२}{६}$ ॥ यजुः—ॐसत्रस्यऽऋद्धिरस्यगन्मज्ज्योतिरमृताऽअभूम ॥ दिवम्पृथिव्याऽअद्ध्यारुहामाविदामदेवान्त्स्वज्ज्योतिः ॥ $\frac{५२}{८}$ ॥ ब्राह्मणम्—ॐतऽउत्तरस्यहविर्द्धानस्यजघन्यायाङ्क्वर्षा॑ सामाभिगायन्तिसत्रस्यऽऋद्धिरितिराद्धिमेवैतदभ्युत्तिष्ठंत्युत्तरवेदेर्वोत्तरायाॅ श्रोणावित्तरंतुऋतूत्तरम् ॥ साम—

२र र र र र र र २ १ २ १र २ १ २ १र २
औ हो वा औ हो वा औ हो ३ वा । अगन्म ज्यो तिः । अगन्म ज्योतिः ।
१ २ १र २ १ र २ र २ १ र २ र २ १ र २ र र १ २ १र र २र र १ २ १र र
अगन्मज्यो तिः । अमृताअ भूम । अमृता अभूम । अमृता अ भू मा । तरिक्षंपृथिव्याअध्यारु हा मा । तरिक्षंपृथिव्याअध्यारु
२र २ १ २ १र र २ २र १ २ १ २र १ २र २र १ २ १ २र १ २र २र १ २ १ २र १ २र २र
हा मा । तरिक्षंपृथिव्याअध्यारुहाम । दिवमन्तरिक्षा दध्यारु हा म । दिवमन्तरिक्षादध्यारु हाम । दिवमन्तरिक्षा दध्या रुहाम ।
१ २र र १र १ २र र १र १ २र र १र १ २र १र २ १ २र १र २ १ २र १र २र
अविदामदे वा न् । अविदामदे वा न् । अविदामदे वान् । समुदे वै रगन्महि । समु दे वै रगन्महि । समु दे वै रगन्महि । औ
र र २र र र २र २ १ र ३ १ १ १ १
हो वा । औ हो वा । औ हो ३ वा । सुवर्ज्यो ती २ ३ ४ ५ः ॥ आरण्यगानस्य चतुर्थप्रपाठकस्य प्रथमार्द्धे साम ४ ॥

---

+ इति यजमानो वदेत्। * इति ब्राह्मणा वदेयुः ॥

अथर्वणः—ॐऋधङ्मंत्रोयोनिंयआंबभूवामृतासुर्वर्द्धमानः सुजन्मा॥अदब्धासुभ्राजमानोहेवत्रितोधर्त्तादाधारत्रीणि॥ का० ५अ० १सू० १मं० धनधान्यधराधर्मनिधिकोशगृहाणि च । ध्रुवाणि यत्र तिष्ठन्ति सा ऋद्धिः सर्वदास्तु ते॥ ×स्वस्त्यस्तु या विनाशाख्या पुण्यकल्याणवृद्धिदा। विनायकप्रिया नित्यं तांचस्वस्ति ब्रुवन्तुन.॥ ×भोब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणाय ग्रहशान्त्याख्याय कर्मणे स्वस्ति भवन्तो ब्रुवन्तु॥ *ॐआयुष्मते स्वस्ति ॥ एवं त्रिः ॥ ऋक्—ॐस्वस्तिरिद्धिप्रपथेश्रेष्ठारेक्णस्वत्यभियावा-ममेति ॥ सानोऽअमासोऽअरणेनिपातुस्वावेशाभवतुदेवगोपा ॥ ८ ५/२ ॥ यजुः—ॐस्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ १९/२५ ॥ ब्राह्मणम्—ॐगातुम्यज्ञायमातुम्यज्ञपतयऽइतिगातुंह्येषयज्ञायेच्छतिगातुम्यज्ञपतयेयोयज्ञस्यसंस्थान्दैवीस्वस्तिरस्तुनःस्वस्तिर्मानुष्येभ्यऽइतिस्वस्तिनोदेवत्रास्तुस्वस्तिर्मानुष्यत्रेत्येवैतदाहोर्ध्वंजिगातुभेषजमित्यूर्ध्वोनोयम्यज्ञोदेवलोकम्यजत्वित्येवैतदाहशन्नोऽअस्तुद्विपदेशञ्चतुष्पदऽइत्येतावद्वाऽ इदंसर्वम्यावद्द्विपाच्चैवचतुष्पाच्चतस्माऽएवैतद्यज्ञस्यसंस्थांगत्वाशंकरोतितस्मादाहशन्नोऽअस्तुद्विपदेशंचतुष्पदे ॥ साम—ॐत्रा तारमिन्द्रमविता । रमि २३ न्द्राम् । हव हवे सुहवंशूः । र मी २३ न्द्राम् । हुवाइ नुशक्रंपुरुहू । तमी २३ न्द्राम् । इ दंह । वाइः । म घ वा । वा ३४३ इ । तू ३ वा ५ इन्द्रा ६५६ः ॥ वेयगानस्य नवमप्रपाठकस्य प्रथमार्द्धे साम ३ ॥ अथर्वणः—ॐस्वस्तिमात्रउतपित्रेणोअस्तु स्वस्तिगोभ्योजगतेपुरुषेभ्यः॥विश्वंसुभूतंसुविदत्रन्नोअस्तुज्योगेवदृशेमसूर्यम्॥ का० १ अ० ६ सू० ३१ मं० ४ प्रजापतिर्लोकपालो धाता ब्रह्मा च देवराट् । भगवाञ्छाश्वतो नित्यं स्वस्ति कुर्वंतु ते सदा ॥ ×समुद्रमथनाज्जाता जगदानन्दकारिका । हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ॥ +भो ब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य ग्रहशान्त्याख्यस्य कर्मणः

× इति यजमानो वदेत् * इति ब्राह्मणा वदेयुः ॥

+श्रीरस्त्विति भवन्तो ब्रुवन्तु ॥ *ॐ अस्तु श्रीः ॥ एवं त्रिः ॥ ऋक्—ॐ श्रिये जातः श्रिय आनिरियाय श्रियं वयो जरितृभ्यो दधाति ॥ श्रियं वसाना ऽअमृतत्वमायन्भवन्ति सत्या समिथा मितद्रौ ॥ ७-४ ॥ यजुः—ॐ मनसःकाममाकूतिं वाचः सत्यमशीय ॥ पशूनाꣳ रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ॥ ४/३९ ॥ अथवा—ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्म ऽइषाण सर्वलोकम्म ऽइषाण ॥ २२/३१ ॥ ब्राह्मणम्—ॐ तेनो हततऽईजे दक्षꣳ पार्वतिस्त ऽइमेप्येतर्हि दाक्षायणा राज्यमिवैव प्राप्ता राज्यमिव ह वै प्राप्नोति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत स्मा ऽएकैक ऽएवानूचिनाहं पुरोडाशो भवत्येतेनो हास्यासपत्नानुपबाधा श्रीर्भवति ॥ ॐ श्रायन्तइवसू४ रायों । विश्वा १२ इदिन्द्रा १२ । स्यंभा १२ क्षाता । वां सूं निं जां तो ज निर्मा । नियोजों१ सा १२ । प्रीतिभा गं नदी २ धिमः । प्रां २३ ती । भार्गानां ३ दां । हुं । धिमां ३ः । ओ २३४वां । हैं १ ३ ४ ५ ॥ वेयगानस्य सप्तमप्रपाठकस्य द्वितीयार्द्धे साम ५ ॥ अथर्वणः—ॐ एहयातु वरुणः सोमो अग्निर्बृहस्पतिर्वसुभिरेहयातु ॥ अस्याश्रियमुपसंयातसर्वे ऽउग्रस्य चेतुः संमनसः सजाताः ॥ काण्ड ६ अनुवाक् ८ सूत्र ७३ मंत्र १ ॥ +कृतेऽस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् श्रीमहागणपतिप्रसादाच्च सर्वः परिपूर्णोऽस्तु ॥ *अस्तु परिपूर्णः ॥ अथाभिषेकः ॥ कर्तुर्वामतः पत्नीं उपवेश्य ॥ पात्रपातितकलशोदकेन अविधुराश्चत्वारो ब्राह्मणा दूर्वाम्रपल्लवैरुदङ्मुखास्तिष्ठन्तः सपत्नीकं यजमानमभिषिञ्चेयुः ॥ तत्र मंत्राः—ॐ पयः पृथिव्यां पय ऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ॥ पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ ३६/१८ ॥ ॐ पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः ॥ सरस्वती तु पञ्चधा सो देशे भवत्सरित् ॥ ११/३४ ॥ ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्य ऽऋतसदन्यसि वरुणस्य ऽऋतसदनमसि वरुणस्य ऋतसदनमासीद ॥ ३६/४ ॥ ॐ पुनन्तु-

---

+ इति यजमानो वदेत् ॥ *इति ब्राह्मणा वदेयुः ॥ १सर्वेषु धर्मकार्येषु पत्नी तिष्ठति दक्षिणे । विप्रपादक्षालने च अभिषेके तु वामतः ॥ यज्ञादिशुभकार्येषु कन्यापाणिग्रहे तथा । पत्नीदक्षिणतः कार्या आश्लेषामूलवर्जिता ॥ वामे पत्नी त्रिषु स्थाने पितॄणांपादशौचने । रथस्यारोहणे चैव सुखसंबंधकर्मणि ॥ सीमंते च विवाहे च चतुर्थीसहभोजने । व्रते दाने मखे श्राद्धे पत्नी तिष्ठति दक्षिणे ॥

मादेवजना?पुनन्तुमनसाधियं÷ ॥ पुनन्तुविश्श्वाभूतानिजातवेदᳪपुनीहिमा ॥ ३९/१९ ॥ ॐदेवस्यंत्त्वासवितु?प्पसवेश्श्विनोर्बाहुब्भ्याम्पूष्णोह-
स्ताब्भ्याम् ॥ सरस्वत्यैव्वाचोयन्तुर्य्यन्त्रियेदधामिबृहस्प्पतेष्ट्वासाम्म्राज्ज्येनाभिषिंश्चाम्म्यसौ ॥ ३०/९ ॥ ॐदेवस्यंत्वासवितु?प्पसवेश्श्विनोर्ब्बाहु-
ब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ सरस्वत्त्यैव्वाचोयन्तुर्य्यन्त्रेणाग्ग्ने?साम्राज्ज्येनाभिषिश्चामि ॥ ३७/१८ ॥ ॐदेवस्यंत्वासवितु?प्पसवेश्श्विनोर्ब्बाहु-
ब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ अश्श्विनोब्भैषज्ज्येनतेजसेब्ब्रह्मवर्च्चसायाभिषिंश्चामिसरस्वत्यैभैषज्ज्येनव्वीर्य्यायान्नाद्यायाभिषिंश्चामीन्द्रस्येन्द्रि-
येणबलायश्श्रियैयशसेभिषिंश्चामि ॥ ३/२० ॥ ॐविश्श्वानिदेवसवितर्द्दुरितानिपरासुव ॥ यद्भद्रन्तन्नऽआसुव ॥ ३/३० ॥ ॐधामच्छदग्ग्निरिन्द्रोब्रह्मा-
देवोबृहस्प्पतिं÷ ॥ सचेतसोविश्श्वेदेवायज्ञम्प्रावन्तुनᳪशुभे ॥ ७६/१८ ॥ ॐत्वंय्यविष्ठदाशुषोनॄ?पाहिशृणुधीगिरं÷ ॥ रक्षातोकमुतत्क्मना ॥ ५२/१३ ॥
ॐअन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिमणं÷ ॥ प्रप्रदातारन्तारिषऽऊर्ज्जन्नोधेहिद्विपदेचतुष्पदे ॥ ८३/११ ॥ ॐद्यो?शान्तिरन्तरिक्षᳪशान्ति÷पृथिवी-
शान्तिरापᳪशान्तिरोषधयᳪशान्तिं÷ ॥ वनस्प्पतयᳪशान्तिर्विश्श्वेदेवा?शान्तिर्ब्रह्मशान्तिᳪसर्व्वᳪशान्तिᳪशान्तिरेवशान्तिᳪसामाशान्तिरेधि ॥
॥ १७/३६ ॥ ॐयतोयतᳪसमीहसेततोनोऽअभयङ्कुरु ॥ शन्न÷कुरुप्प्रजाभ्योभयन्नᳪपशुब्भ्य÷ ॥ २२/३६ ॥ ब्राह्मणम्—ॐपालाशंभवतितेनब्राह्मणो-
भिषिश्चतिब्रह्मवैपलाशोब्रह्मणैवैनमेतदभिषिश्चति ॥ औदुंबरंभवतितेनस्वोभिषिश्चत्यन्नंवाऽऊर्गुदुंबरऽऊर्ग्वैस्वंयावद्वैपुरुषस्यस्वंभवतिनैवताव-
दशनायतितेनोर्क्स्वंतस्मादौदुंबरेणस्वोभिषिश्चति ॥ नैय्यग्रोधपादंभवतितेनमित्रोराजन्योभिषिश्चतिपद्भिर्वैन्यग्रोधᳪप्रतिष्ठितोमित्रेणवैराजन्यः
प्रतिष्ठितस्तस्मान्नैय्यग्रोधपादेनमित्रोराजन्योभिषिश्चति ॥ आश्वत्थंभवतितेनवैश्योभिषिश्चतिसयद्देवादोश्वत्थेतिष्ठतऽइन्द्रोमरुतऽउपामंत्रयते
तस्मादाश्वत्थेनवैश्योभिषिश्चति ॥ यद्देवकल्पाञ्जुहोतिप्राणावैकल्पाऽअमृतमुवैप्राणाऽअमृतेनैवैनमेतदभिषिंचति ॥ सर्वेषांवाऽएषवेदानाᳪर-
सोयत्सामसर्व्वेषामेवैनमेतद्वेदानाᳪरसेनाभिषिंचति ॥ पौराणाः—सुरास्त्वामभिषिश्चन्तु ब्रह्मविष्णुमहेश्वराः ॥ वासुदेवो जगन्नाथस्तथासङ्क-
र्षणो विभुः ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ॥ आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।

ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिःश्रद्धाक्रियामतिः । बुद्धिर्लज्जावपुः शान्तिः कान्तिस्तुष्टिश्च मातरः॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः। आदित्यश्चन्द्रमाभौमो बुधजीवसितार्कजाः॥ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः। देवदानवगन्धर्वा यक्षराक्षसपन्नगाः॥ ऋषयो मनवो गावो देवमातर एव च । देवपत्न्योद्रुमानागा दैत्याश्चाप्सरसांगणाः॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानि च । औषधानिचरत्नानि कालस्यावयवाश्चये ॥ सरितः सागराः शैलास्तीर्थानि जलदानदाः । ब्रह्माविष्णुश्चरुद्रश्च मुनयः सकला ग्रहाः। वेदमंत्राश्च कल्पाश्च प्रयच्छन्तु शुभं फलम् ॥ तपोधनाः कर्मपरा ह्यग्निहोत्रपरायणाः । अग्निहोत्रं च यज्ञाश्च तव सन्तु सुखप्रदाः॥ मीमांसाश्चपुराणानि इतिहासाः ससूत्रकाः । भाष्यवार्तिकतत्त्वज्ञाः कल्याणानि दिशन्तुते॥ अग्निःसोमश्चवायुश्च धर्मःसत्यंक्षमादया। तवस्वस्तिपरानित्यं सन्तुवैशुभदायकाः॥ ब्रह्माणीचैवगायत्री सावित्रीश्रीरुमासती। अरुन्धत्यनसूयाच तवसन्तुफलप्रदाः॥ तीर्थानिसरितःपुण्याःसरांसिपुष्कराणिच । अचलाश्चचलाश्चैव तवस्वस्तिकराःसदा ॥ वेदव्यासश्चवाल्मीकी रामश्चापिपराशरः । देवलःपर्वतश्चैव दुर्वासाभार्गवस्तथा ॥ याज्ञवल्क्यश्चजाबालिर्जमदग्निः शुचिश्रवाः । विश्वामित्रः स्थूलशिराश्च्यवनोत्रिर्विदूरथः॥ एकतश्च द्वितश्चैव त्रितोगौतमगालवौ । शाण्डिल्यश्च भरद्वाजोमौद्गल्योवेदवाहनः ॥ कात्यायनश्च कण्वश्च वालखिल्यास्तथैवच । पृथुर्दिलीपो भरतो मान्धाता च पुरूरवाः ॥ अम्बरीषः ककुत्स्थश्च मुचकुन्दोथ भूभृतः । श्वेतश्च शृङ्गवान्मेरुर्विन्ध्याद्रिर्गन्धमादनः । माल्यवान्पारियात्रश्च सर्वएवमहीधराः । ऋग्वेदोथ यजुर्वेदः सामवेदोह्यथर्वणः॥ शिक्षाकल्पोव्याकरणं निरुक्तंज्योतिषन्तथा । छन्दःशास्त्राणिसर्वाणि पुराणैःसकलैःसह ॥ सांख्ययोगौपञ्चरात्रं शैवं पाशुपतं तथा। गायत्रीपापशमनी दुर्गादेवीमहाशिवः॥ स्थानानि च समस्तानि पुण्यान्यायतनानि च। लवणः क्षीरतोयश्च घृतमण्डोदकस्तथा॥ दधिमण्डःसुरोदश्च इक्षुस्वादूदकस्तथा । पुष्करश्चप्रयागश्च प्रभासंनैमिषंतथा ॥ गयाशिरोब्रह्मशिरस्तथैवोत्तरमानसम्। गङ्गाद्वारंकुशावर्तं बिल्वकंनीलपर्वतम् ॥ वारा-

हंभृगुतुङ्गश्च शालिग्रामसरस्तथा ॥ शूर्पारकंपौण्डरीकं गङ्गासागरसङ्गमम् ॥ धर्मारण्यं फल्गुतीर्थमविमुक्तं तु मोक्षदम् । गङ्गासरस्वतीपुण्यासरयूगण्डकीतथा ॥ कौशिकीयमुनाक्षिप्रा चन्द्रभागाचगोमती । मन्दाकिनीदशार्णाच तामसीचकुमुद्वती ॥ रेवावैतरणीभीमा कृष्णावेण्यामहीतथा । गोदावरीभीमरथीगौतमीचाश्वनद्यपि ॥ तुङ्गभद्राताम्रपर्णी कावेरीनेत्रवत्यपि । नन्दाचालकनन्दाच करतोयाचपिप्पला ॥ सर्वपापशमन्यश्चसर्वलोकस्यमातरः । स्वतोयपूर्णैःकलशैरभिषिञ्चन्तुसर्वदा ॥ भूराद्याःसप्तलोकाश्च पातालानितथैवच । द्वीपाजंब्वादिकाःसप्त तथासप्तैवसिन्धवः ॥ ब्रह्मादिसप्तकल्पाश्च मनवश्चचतुर्दश । कृतंत्रेताद्वापरश्च कलिश्चेतिचतुर्युगम् ॥ संवत्सराश्चऋतवो मासपक्षदिनानिच । एतेत्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ सहस्राक्षं शतधारं ऋषिभिः पावनंकृतम् । तेनत्वामभिषिञ्चामि पावमान्यः पुनन्तुते ॥ भगन्तेवरुणोराजा भगंसूर्योबृहस्पतिः । भगमिन्द्रश्चवायुश्च भगंसप्तर्षयोदधुः ॥ यत्तेकेशेषु दौर्भाग्यं सीमन्तेयच्चमूर्द्धनि । ललाटेकर्णयोरक्ष्णोरापोनिघ्नन्तुतेसदा ॥ शान्तिः शान्तिः सुशान्तिर्भवतु ॥ स्वस्थानेउपविश्यहस्तेजलंगृहीत्वा—अभिषेककर्तृभ्योब्राह्मणेभ्योयथोत्साहदक्षिणांदास्येतेनश्रीकर्माधीशःप्रीयताम् ॥ ततःपुत्रवतीभिर्वृद्धसुवासिनीभिर्नीराजनंकार्यम् ॥ तस्यमंत्रः—ॐअनाधृष्टापुरस्तादग्नेराधिपत्यऽआयुर्म्मेदाः पुत्रवतीदक्षिणतऽइन्द्रस्याधिपत्येप्रजाम्मेदाः सुखदापश्चाद्देवस्यंसवितुराधिपत्येचक्षुर्म्मेदाऽआश्रुतिरुत्तरतोधातुराधिपत्येरायस्पोषम्मेदाः ॥ विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्यऽओजोमेदाविश्वाभ्योमानाष्ट्राभ्यस्पाहिमनोरश्वासि ॥ $\frac{१२}{३७}$ ॥ अनेनपुण्याहवाचनेनश्रीआदित्यादिनवग्रहाः प्रीयन्ताम् ॥ इतिपुण्याहवाचनप्रयोगः

---

१ वारुणैःपावमानीयैरभिषिच्यसपत्निकम् । नीराजनंततःकुर्यादन्तेकर्मेश्वरार्पणम् ॥ २ पुण्याहवाचनेकर्माङ्गदेवतानामानि । धर्मसिन्धौ—विवाहस्याग्निर्देवता तेन विवाहाङ्गभूतस्वस्तिवाचनाद्यन्ते कर्माङ्गदेवताग्निः प्रीयतामिति वदेत् ॥ औपासनेग्निसूर्यप्रजापतयः स्थालीपाकेऽग्निः गर्भाधाने ब्रह्मा पुंसवने प्रजापतिः सीमन्ते धाता जातकर्मणि मृत्युः नामकर्मनिष्क्रमणान्नप्राशनेषु सविता चौलेकेशिनःउपनयनेइन्द्रश्रद्धामेधाःअंतेसुश्रवाः पुनरुपनयनेऽग्निः समावर्तनस्येन्द्रः उपाकर्मणि व्रतेषु च सविता वास्तुहोमे वास्तोष्पतिरंतेप्रजापतिः आग्रयणे आग्रयणदेवताः सर्पबलेः सर्पाः तडागादीनां वरुणः ग्रहयज्ञे आदित्यादिनवग्रहाः कूष्मांडहोमे चांद्रायणे अग्न्याधाने चाग्न्यादयः अग्निष्टोमस्याग्निः अन्येष्विष्टकर्मसु प्रजापतिः ॥

## ॥ अथ मातृकापूजनप्रयोगः ॥

सीमन्तोन्नयनेचूडाकरणेउपनयनेकेशान्तेविवाहेइतिपञ्च[1]सुमण्डपसत्वात्तत्रषड्विनायकादिघृतमातृकान्तानांपूजनंकार्यं॥मण्डपाभावेतुसगणाधिपगौर्यादिचतुर्दशमातॄणांसप्तघृतमातॄणांचपूजनंकार्यम् ॥ तत्रादौवैश्वदेवंकुर्यात् ॥ तदकरणेसङ्कल्पः—इदंवैश्वदेवहवनीयद्रव्यं सदक्षिणाकमत्रावसरेवैश्वदेवाकरणजनितप्रत्यवायपरिहारार्थंकरणजनितफलप्राप्त्यर्थंअमुकशर्मणेब्राह्मणायविष्णुरूपायतुभ्यमहंसंप्रददे ॥ अनेनवैश्वदेवकरणजनितफलसिद्धिरस्तु ॥ ततोगोधूमादिधान्यपूरितेहरिद्रादिरञ्जितेमृन्मयेअविघ्नाख्यकलशेमोदादिषड्विनायकानां प्रतिमाःकुंकुमादिनालिखित्वा । आवाहनम्—ॐमोदायनमःमोदंआवाहयामि ॥ ॐप्रमोदायनमःप्रमोदंआवाहयामि ॥ ॐसुमुखाय नमःसुमुखंआवाहयामि ॥ ॐदुर्मुखायनमःदुर्मुखंआवाहयामि ॥ ॐअविघ्नायनमःअविघ्नंआवाहयामि ॥ ॐविघ्नकर्त्रेनमःविघ्नकर्तारंआवाहयामि ॥ प्रतिष्ठापनम्—ॐमनोजूति० ॐभूर्भुवःस्वःमोदादिषड्विनायकाःसुप्रतिष्ठितावरदाभवन्तु ॥ ॐमोदादिषड्विनायकेभ्योनमइतिषोडशोपचारैःसंपूज्य ॥ अनयापूजयामोदादिषड्विनायकाःप्रीयंताम् ॥ इतिअविघ्नं[2]पूजनम् ॥

अथमण्डपदेवतापूजनम् ॥ तत्रमण्डपस्तम्भनिवेशनार्थंगर्तखननंतद्यथा—वृषाद्राशित्रयेस्थितेसूर्येसतिआग्नेय्याम् ॥ सिंहाद्राशित्रयेईशान्याम् ॥ वृश्चिकाद्राशित्रयेवायव्याम् ॥ कुंभाद्राशित्रयेनैर्ऋत्याम् ॥ एवंगर्तखननार्थंस्थाननिश्चयंकृत्वानिश्चितकोणसमीपेसभार्यो यजमानःपूर्वाभिमुखउपविश्यहस्तेजलमादायअमुकशर्मणोममसुतस्यवासुतायाः करिष्यमाणअमुकसंस्काराङ्गभूतस्थंडिलादिकर्तुंभूमिकु-

---

१ बहिःशालगृहाद्बहिर्मंडपइत्यर्थः । पा० गृ० सूत्रे—पञ्चसुबहिःशालायांविवाहेचूडोपनयनेकेशान्तेसीमन्तोन्नयने ॥ २ अविघ्नोमंडपश्चैवमातृणांपूजनंसकृत् । वैश्वदेवंबलोद्धाराना-न्दीश्राद्धमतःपरम् ॥ अविघ्नपूजनात्पूर्वंवैश्वदेवंविधायच ॥ ३ संक्षेपतःकरणेषड्विनायकादिघृतमातृकान्तानांचतुःषष्टिमातृणामेकतंत्रेणावाहनादिपूजनान्तंकार्यम् ॥ वस्तुतस्तुपृथक्पृथक् पूजनमेवश्रेष्ठतरम् ॥ ४ मोदश्चैवप्रमोदश्चसुमुखोदुर्मुखस्तथा । अविघ्नोविघ्नकर्ताचषडेतेविघ्ननाशकाः ॥ ५ वृषादित्रयेवह्निकोणेशुभंस्यात्तथासिंहकादित्रयेचेशकोणे ॥ भवेद्वृश्चिकादित्रये-वायुकोणेघटादित्रयेनिर्ऋतौखातमाहुः ॥ एवंकोणनिश्चयंकृत्वादशहस्तपरिमितंसंकोचेचतुर्हस्तंषड्हस्तंअष्टहस्तंवासमचतुरस्रंमण्डपंकृत्वानिश्चितकोणेगर्तंखनेत् ॥

मांनंतवराहाणांपूजनपूर्वकंमण्डपदेवतास्थापनप्रतिष्ठापूजनंकरिष्ये ॥भूरसीत्यस्यप्रस्तारपंक्तिऋषिः अनुष्टुप्छन्दः भूमिर्देवताभूमिपूजनेवि-
नियोगः ॥ ॐभूरसिभूमिरस्यदीतिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवींयच्छपृथिवीन्दृंहपृथिवीम्माहिंसीः ॥ $\frac{१८}{१३}$ ॥ ॐभू-
म्यैनमः भूमिंआवाहयामि ॥ ॐभूम्यैनमः इत्यनेनदीपसमर्पणान्तंपूजनंकृत्वाततः बलिदानम्—ॐभूरसि० भूम्यैसाङ्गायैसपरिवारायैसायु-
धायैसशक्तिकायैनमः इदंयथोपनीतंपायसादिनानाविधबलिंसमर्पयामि ॥ भो भूमे इमंबलिंभक्षभक्षसर्वदुष्टेभ्योमांसपरिवारंरक्षरक्षममगृहे
आयुःकर्त्रीपुष्टिकर्त्रीतुष्टिकर्त्रीशान्तिकर्त्रीवरदाभव ॥ ततः नैवेद्यं आचमनंफलताम्बूलहिरण्यदक्षिणांचसमर्प्यअर्घ्यंदद्यात् ॥ ताम्रपात्रे
गन्धपुष्पाक्षतफलहिरण्यदूर्वादिसहितंजलंगृहीत्वाजानुभ्यामवनिंगत्वा—आगच्छसर्वकल्याणिवसुधेलोकधारिणि । पृथिविब्रह्मदत्तासि
काश्यपेनाभिवन्दिता ॥ उद्धृतासिवराहेणसशैलवनकानना । मण्डपंकारयाम्यद्यत्वदूर्ध्वंशुभलक्षणम् ॥ गृहाणार्घ्यमिमंदेविप्रसन्नावरदा
भव ॥ भूम्यैसाङ्गायैसपरिवारायैसायुधायैसशक्तिकायैनमः इदंअर्घ्यंसमर्पयामि ॥ अर्घ्यान्तेआचमनंप्रदक्षिणांआरार्तिक्यंचकृत्वामंत्र-
पुष्पाञ्जलिः—नन्दनन्दयवासिष्ठेवसुधेपूजयाम्यहं । जयेभार्गवदायादेप्रजानांजयमावह ॥ पूर्णेगिरीशदायादेपूर्णकामंकुरुष्वमे । भद्रे
काश्यपदायादेकुरुभद्रांमतिंमम ॥ ब्रह्मणानिर्मितेदेवि विष्णुनाशङ्करेणच । पार्वत्याचैवगायत्र्यास्कंदवैश्रवणेनच ॥ यमेन पूजिते देवि
धर्मस्यविजिगीषया । सौभाग्यं देहि पुत्रांश्च धनंरूपंचपूजिता ॥ भूम्यैनमः मंत्रपुष्पांजलिंसमर्पयामि ॥ अनयापूजयाभूमिः प्रीयताम् ॥
यस्यकूर्मेत्यस्यप्रजापतिऋषिः अनुष्टुप्छंदः कूर्मोदेवताकूर्मपूजनेविनियोगः ॥ ॐयस्यकूर्मोगृहेहविस्तमग्नेवर्द्धयात्वम् ॥ तस्मैदेवाऽ-
अधिब्रुवन्नयञ्चब्रह्मणस्पतिः ॥ $\frac{५२}{१७}$ ॥ ॐकूर्मायनमः कूर्मंआवाहयामि ॥ ॐकूर्मायनमः इत्यनेनमंत्रेणषोडशोपचारैः संपूज्य ॥ अनन्तपू-
जनम्—स्योनापृथिवीत्यस्यमेधातिथिऋषिः अनन्तोदेवतागायत्रीछन्दः अनन्तपूजनेविनियोगः—ॐस्योनापृथिविनोभवानृक्षरानिवे-
शनी ॥ यच्छानःशर्मसप्रथाः ॥ $\frac{१३}{३६}$ ॥ ॐअनन्तायनमः अनंतं आवाहयामि ॥ ॐअनन्तायनमः इत्यनेनमंत्रेणषोडशोपचारैः सं-

पूज्य ॥ ततःॐवराहायनमःइत्यनेनमंत्रेणवराहंशोडषोपचारैःपूजयेत् ॥ ततः अभ्रिग्रहणम्—देवस्यत्वेत्यस्यदधीचऋषिःनिच्यृदार्ष्युष्णिक्छंदःअभ्रिर्दैवताअभ्रिग्रहणे विनियोगः ॥ ॐदेवस्यंत्वासवितुःप्प्रंसवेश्विनोर्ब्बाहुब्भ्यांम्पूष्णोहस्ताभ्याम् ॥ आदंदेनारिरसि ॥ $\frac{१}{३७}$ ॥ इत्यनेनअभ्रिमादायततःखननम्—ॐमावोरिषत्खनिताषस्मैचाहङ्खनांमिवं ॥ द्विपाच्चतुंष्पादस्माकंसर्व्वमस्त्वनातुरम् ॥ ॥ $\frac{९५}{१२}$ ॥ इत्यनेनगर्तंखनित्वातस्मिन्गर्तेजलसेचनम्—ॐसिञ्चन्तिपरिषिञ्चत्युत्सिञ्चन्तिपुनन्तिच ॥ सुरांयैबब्भ्रैमदेकिन्त्वोवंदति क्रिन्त्वः ॥$\frac{२८}{२०}$ ॥ इत्यनेनजलंनिक्षिप्य । यवनिक्षेपः—ॐयवोसियवयास्मद्वेषोयवयारांतीः ॥ $\frac{२६}{५}$ इत्यनेनयवान्निक्षिप्यदर्भसिद्धार्थकाँस्तूष्णीन्निक्षिपेत् ॥ दूर्वाप्रक्षेपणम्—ॐकाण्डात्काण्डात्प्ररोहंन्ती० ॥ $\frac{२०}{१३}$ ॥ इत्यनेनदूर्वाङ्कुरान्क्षिप्त्वादधिप्रक्षेपः—ॐदधिक्राव्णो० ॥ ॥ $\frac{३२}{२३}$ ॥ फलप्रक्षेपः—ॐयाःफलिनी० ॥$\frac{८१}{१२}$॥ हिरण्यप्रक्षेपः—ॐहिरण्यगर्भः० ॥ $\frac{४}{१३}$ ॥ इत्यनेनहिरण्यंनिक्षिप्यस्तंभोच्छ्रयणम्—ॐउच्छ्रयस्ववनस्पतऽऊर्द्ध्वोमांपाह्यंहसऽआस्ययज्ञस्योदृचं ॥ $\frac{१०}{४}$ ॥ इत्यनेनरक्तसूत्रमदनफलबद्धस्तम्भमुत्थाप्यततःरोपणंतस्य मंत्रः—ॐऊर्द्ध्वऽऊषुणंऽऊतयेतिष्ठादेवोनसंविता ॥ ऊर्द्ध्वोवाजस्यसनितायदञ्जिभिर्व्वाघद्भिर्व्विह्वयांमहे ॥ $\frac{४२}{११}$ ॥ इत्यनेनगर्तेस्तंभंनिधाय स्थिरीकरणम्—ॐस्थिरोभवंवीड्वङ्गऽआशुर्भवव्वाज्ज्यर्वन् ॥ पृथुर्भवसुखदस्त्वमग्नेःपुरीषवाहणः ॥ $\frac{४४}{११}$ ॥ इत्यनेनसमंततोमृदा स्थिरीकृत्यततःअन्यस्तंभान्यथास्थानेरोपयेत् ॥ ततःमण्डपमातृकाःस्थापयेत् ॥ तत्रआचार्यहस्तेसुप्रोक्षितादिकंकार्यंयथा—

अत्राःपान्तुसुप्रोक्षितमस्त्वितिभवन्तोब्रुवन्तु ॥ ॐअत्राःपान्तुसुप्रोक्षितमस्तु ॥ गन्धाःपान्तुसौमंगल्यंचास्त्वितिभवन्तोब्रुवन्तु ॥ ॐगन्धाःपान्तुसौमंगल्यंचास्तु ॥ अक्षताःपान्तुआयुष्यमस्त्वितिभवन्तोब्रुवन्तु ॥ ॐअक्षताःपान्तुआयुष्यमस्तु ॥ पुष्पाणिपान्तु सौश्रियमस्त्वितिभवन्तोब्रुवन्तु ॥ ॐपुष्पाणिपान्तुसौश्रियमस्तु ॥ ताम्बूलानिपान्तुऐश्वर्यमस्त्वितिभवन्तोब्रुवन्तु ॥ ॐताम्बूलानि पान्तुऐश्वर्यमस्तु ॥ दक्षिणाःपान्तुबहुधनमस्त्वितिभवन्तोब्रुवन्तु ॥ ॐदक्षिणाःपान्तुबहुधनमस्तु ॥ अपूपाःपान्तुबह्वन्नंचास्त्वितिभवन्तोब्रुवन्तु ॥ ॐअपूपाःपान्तुबह्वन्नंचास्तु ॥ शाखादूर्वाःपान्तुशाखापल्लवानांवृद्धिरस्त्वितिभवन्तोब्रुवन्तु ॥ ॐशाखादूर्वाःपान्तुशा-

खापल्लवानांवृद्धिश्चास्तु ॥ ततआचार्येणदूर्वाशम्याम्रादिप्रशस्तवृक्षपत्राणांरक्तसूत्रेणपृथक्पृथक्पञ्चधावेष्टनंकार्यम् ॥ तासांमण्डपमातृसंज्ञा ॥ तासांमण्डपमातृणांएकस्मिन्पात्रेस्थापनम् ॥ यजमानपत्न्याशाखासुतैलारोपणंकार्यम्——वसोंःपवित्रंमसिशतधारंवसोःपवित्रंमसिसहस्रंधारम् ॥ देवस्त्वांसवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामंधुक्षः ॥ $\frac{3}{1}$ ॥ शाखासुहरिद्राकुंकुमादिसुगन्धिद्रव्येणोद्वर्तनम्—ॐअहिरिवभोगैःपर्येतिबाहुञ्ज्यायाहेतिम्परिबाधमानः ॥ हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमांसम्परिपातुविश्वतः ॥ $\frac{51}{29}$ ॥ उष्णोदकेनशाखास्नपनम्—ॐनिकामेनिकामेनःपर्ज्जन्योवर्षतुफलवत्योनऽओषधयःपच्यन्तांयोगक्षेमोनःकल्पताम् ॥ $\frac{22}{22}$ ॥ शाखासुदध्यक्षतप्रक्षेपः—ॐदधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत् ॥ $\frac{32}{23}$ ॥ यजमानेनशाखैकग्रहणम्—तत्रमंत्रः—ॐयाऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगम्पुरा॥ मनैनुबभ्रूणामहःशतन्धामानिसप्तच ॥ $\frac{75}{12}$ ॥ अनेनमंत्रेणसंगृह्यतस्याःशाखायाःमण्डपस्याग्नेयस्तम्भेस्थिरीकरणतत्रमंत्रः—ॐस्थिरोभववीड्वङ्गऽआशुर्भववाज्यर्वन् ॥ पृथुर्भवसुषदस्त्वमग्नेःपुरीषवाहणः ॥ $\frac{44}{11}$ ॥ ततःद्वितीयशाखाग्रहणम्—ॐयाऽओषधीः० ॥ अनेनमंत्रेणसंगृह्यतस्याःनैर्ऋत्यस्तम्भेस्थिरीकरणंतत्रमंत्रः——ॐस्थिरोभव० ॥ ततस्तृतीयशाखाग्रहणम्—ॐयाऽओषधीः० ॥ अनेनमंत्रेणसंगृह्यतस्याःवायव्यस्तम्भेस्थिरीकरणंतत्रमंत्रः—ॐस्थिरोभव० ॥ ततःचतुर्थीशाखाग्रहणम्—ॐयाऽओषधीः० ॥ अनेनमंत्रेणसंगृह्यतस्याःईशानस्तम्भेस्थिरीकरणंतत्रमंत्रः—ॐस्थिरोभव० ॥ एवंमण्डपकोणस्तंभेषुचतस्रःस्थिरीकृत्य ॥ ततःयजमानपत्न्यायज्ञियवृक्षसमिधोपेतापञ्चमीशाखाग्रहणम्—ॐयाऽओषधीः० ॥ अनेनमंत्रेणसंगृह्यतस्याःकण्डनम्—ॐकाण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ $\frac{20}{13}$ ॥ सकृन्मंत्रेणद्विस्तूष्णीम् ॥ एवंत्रिःकण्डनम् ॥ तस्याःमण्डपमध्येस्तंभोपरिस्थिरीकरणम्—ॐस्थिरोभव०॥ ततःशाखास्तंभेनन्दिन्यादिपञ्चमातृणांस्थापनंतत्रायंक्रमः ॥ आग्नेयस्तंभे—ॐनन्दिन्यैनमःनन्दिनींआवाहयामि ॥ नैर्ऋत्यस्त-

१ नंदिनी नलिनी मैत्रा उमा च पशुवर्धिनी । आग्नेयादि क्रमेणैव शाखास्तम्भे प्रतिष्ठिताः

म्भे–ॐनलिन्यैनमःनलिनींआवाहयामि ॥ वायव्यस्तम्भे–ॐमैत्रायैनमःमैत्रांआवाहयामि ॥ ईशानस्तम्भे–ॐउमायैनमःउमांआवाहयामि ॥ मण्डपमध्यस्तम्भे–ॐपशुवर्धिन्यैनमःपशुवर्धिनींआवाहयामि ॥ प्रतिष्ठापनम्–ॐमनोजूति० ॥ नन्दिन्यादिमातरःसुप्रतिष्ठिताःवरदाःभवत ॥ ॐभूर्भुवःस्वःनन्दिन्यादिमण्डपमातृभ्योनमःइत्यनेनषोडशोपचारैःपूजयेत् ॥ अनयापूजयानन्दिन्यादिमण्डपमातरःप्रीयन्ताम् ॥

अथगौर्यादि मातृणां पूजनम् ॥ वंशपात्रे वा पीठोपरि रक्तं पीतं वा वस्त्रं यथाचारंप्रसार्य तदुपरि गोधूमाक्षतपुञ्जेषु पूगीफलेषु वा सगणाधिपगौर्यादि चतुर्दशमातृणां[1] दक्षिणोपक्रमाणां उदगपवर्गाणां प्रत्यगुपक्रमाणां प्रागपवर्गाणां वा स्थापनम् ॥ ॐगणानान्त्वा० ॥ $\frac{२३}{१९}$ ॥ समीपे मातृवर्गस्य सर्वविघ्नहरंपरम् । त्रैलोक्यवंदितं देवं गणेशं स्थापयाम्यहम् ॥ ॐगणेशायनमः गणेशं आवाहयामि स्थापयामि ॥ भोगणपते इहागच्छ इहतिष्ठ ॥ ॐआयङ्गौःपृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरञ्च प्रयंत्स्वः $\frac{३}{६}$॥ $\frac{६}{३}$ ॥ हिमाद्रितनयां देवीं वरदां भैरवप्रियाम् । लम्बोदरस्यजननीं गौरीमावाहयाम्यहम् ॥ ॐभूर्भुवःस्वःगौर्यैनमः गौरींआवाहयामिस्थापयामि ॥ भोगौरिइहागच्छ इहतिष्ठ ॥ ॐहिरंण्यरूपाऽउषसोविरोकऽउभाविन्द्राऽउदिथःसूर्य्यश्च ॥ आरोहतंवरुणमित्रगर्तन्ततश्चक्षाथामदितिन्दितिञ्चमित्रोसिवरुणोसि ॥ $\frac{१६}{१०}$॥ पद्माभांपद्मवदनांविष्णोर्वक्षस्थलेस्थिताम् । जगत्प्रियां पद्मवासांपद्मामावाहयाम्यहम् ॥ ॐभूर्भुवःस्वःपद्मायैनमःपद्मामावाहयामिस्थापयामि ॥ भोपद्मेइहागच्छइहतिष्ठ ॥ ॐकदाचनस्तरीरसिनेन्द्रसश्चसिदाशुषे ॥ उपोपेन्नुमघवन्भूयऽइन्नुतेदानन्देवस्यपृच्च्यतऽआदित्येभ्यस्त्वा ॥ $\frac{२}{८}$॥ उत्पलाक्षींसुवदनांशचींकुण्डलधारि-

---

[1] गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता । गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दश ॥ अत्रचतुर्दशपदसमाहारान्मातरोलोकमातरइति सर्वासां विशेषणम् ॥ केचनमातृन्लोकमातृरपिआवाहयन्तितदयुक्तं एवंकरणेमंडपेषड्विनायकादि घृतमातृकान्तानां चतुःषष्टिमातृणां स्थाने षट्षष्टिमातरः भवन्ति वस्तुतस्तु चतुःषष्टिरेव

णीम् । देवराजप्रियांभद्रांशचीमावाहयाम्यहम् ॥ ॐभूर्भुवःस्वःशच्यैनमःशचीमावाहयामिस्थापयामि ॥ भोशचिइहागच्छइहतिष्ठ ॥ ॐ मेधाम्मेवरुणोददातुमेधामग्निःप्प्रजापतिः ॥ मेधामिन्द्रश्चवायुश्चमेधान्धातादंदातुमेस्वाहा ॥ ५/३२ ॥ वैवस्वतकरोत्फुल्लरक्तपद्माधिवासिनीम् ॥ बुद्धिप्रसादिनींसौम्यांमेधामावाहयाम्यहम् ॥ ॐभूर्भुवःस्वःमेधायैनमःमेधामावाहयामिस्थापयामि ॥ भोमेधेइहागच्छइहतिष्ठ ॥ ॐउपयामगृहीतोसिसावित्रोसिचनोधाश्चनोधाऽअसिचनोमयिधेहि ॥ जिन्वंयज्ञञ्जिन्वंयज्ञपतिम्भगायदेवायत्त्वासवित्रे ॥ ७/८ । जगत्स्रष्ट्रीं जगद्धात्रींदेवींप्रणवमातृकाम् वेदगर्भांभगवतीं सावित्रींस्थापयाम्यहम् ॥ ॐभूर्भुवःस्वःसावित्र्यैनमः सावित्रीं आवाहयामिस्थापयामि ॥ भोसावित्रिइहागच्छइहतिष्ठ ॥ ॐविज्ज्यन्धनुः कपर्द्दिनोविशल्ल्योबाणवाँ२उत ॥ अनेशन्नस्ययाऽइषवऽआभुरस्यनिषङ्गधिः ॥ १०/१६ ॥ सर्वास्त्रधारिणींदेवींसर्वाभरणभूषिताम् । सर्वदेवनुतांध्यातांविजयांस्थापयाम्यहम् ॥ ॐभूर्भुवःस्वःविजयायैनमःविजयां आवाहयामि स्थापयामि ॥ भो विजये इहागच्छ इहतिष्ठ । ॐ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥ २/१६ ॥ सुरारिमथिनीं देवीं देवानांत्राभयप्रदाम् । त्रैलोक्यवंदितांदेवीं जयामावाहयाम्यहम् ॥ ॐभूर्भुवःस्वः जयायै नमःजयांआवाहयामिस्थापयामि ॥ भो जये इहागच्छ इहतिष्ठ ॥ ॐदेवानाम्भद्रासुमतिर्ऋजूयतान्देवानांरातिरभिनोनिवर्त्तताम् ॥ देवानांसख्यमुपसेदिमावयन्देवानऽआयुःप्प्रातिरन्तुजीवसे ॥ १५/२५ ॥ मयूरवाहनांदेवींखड्गशक्तिधनुर्धराम् । आवाहयेदेवसेनां तारकासुरमर्दिनीम् ॥ ॐभूर्भुवःस्वःदेवसेनायैनमःदेवसेनांआवाहयामिस्थापयामि ॥ भोदेवसेनेइहागच्छइहतिष्ठ ॥ ॐपितृभ्यः स्वधायिभ्यःस्वधानमःपितामहेभ्यःस्वधायिभ्यःस्वधानमःप्रपितामहेभ्यःस्वधायिभ्यःस्वधानमः ॥ अक्षन्पितरोमीमदन्त पितरोतीतृपन्तपितरःपितरःशुन्धध्वम् ॥ ३६/१९ ॥ कव्यमादायसततंपितृभ्योयाप्रयच्छति । पितृलोकार्चितांदेवींस्वधामावाहयाम्यहम् ॥ ॐ भूर्भुवःस्वःस्वधायैनमःस्वधांआवाहयामिस्थापयामि ॥ भोस्वधे इहागच्छ इहतिष्ठ ॥ ॐस्वाहायज्ञंमनसःस्वाहोरोरन्तरिक्षात्स्वाहाद्यावापृथिवीभ्यांस्वाहावातादारभेस्वाहा ॥ ६/४ ॥ हविर्गृहीत्वासततंदेवेभ्योयाप्रयच्छति ॥ तांदिव्यरूपांवरदांस्वाहामा—

वाहयाम्यहम् ॥ ॐ भूर्भुवः स्वः स्वाहायै नमः स्वाहां आवाहयामि स्थापयामि ॥ भोस्वाहे इहागच्छ इह तिष्ठ ॥ ॐ धृष्टिरस्यप ाग्ने ऽअ-
ग्निमामादं ज्जहि निष्क्रव्यादं ꣡सेधा देवयजं वह ॥ ध्रुवमसि पृथिवीन्दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय
॥ $\frac{१७}{१}$ ॥ मनस्तुष्टिकरीं देवीं लोकानुग्रहकारिणीम् ॥ सर्वकर्मसमृद्ध्यर्थं धृतिमावाहयाम्यहम् ॥ ॐ भूर्भुवः स्वः धृत्यै नमः धृतिमावाहयामि स्था
पयामि ॥ भो धृते इहागच्छ इह तिष्ठ ॥ ॐ त्वष्टा तुरीपो ऽअद्भुत ऽइन्द्राग्नी पुष्टिवर्द्धना ॥ द्विपदा च्छन्द ऽइन्द्रियमुक्षा गौर्न वयो दधुः ॥ $\frac{२०}{२१}$ ॥
पोषयन्तीं जगत्सर्वं स्वदेहप्रभवाऽव्ययाम् । बहुपुष्टिकरीं देवीं पुष्टिमावाहयाम्यहम् ॥ ॐ भूर्भुवः स्वः पुष्ट्यै नमः पुष्टिमावाहयामि स्थाप-
यामि ॥ भो पुष्टे इहागच्छ इह तिष्ठ ॥ ॐ बृहस्पते ऽअति यदर्यो ऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवस ऽऋतप्रजात तदस्मासु द्र
विणन्धेहि चित्रम् ॥ $\frac{३}{२६}$ ॥ आवाहयामि तां तुष्टिं सूक्ष्मवस्त्रान्वितां शुभाम् ॥ संतोषाय हि देवानां रक्षणाय च्छरेमम ॥ ॐ भूर्भुवः स्वः तुष्ट्यै नमः
तुष्टिमावाहयामि स्थापयामि ॥ भो तुष्टे इहागच्छ इह तिष्ठ ॥ ॐ अम्बे ऽअम्बिके ऽम्बालिके न मा नयति कश्चन ॥ ससस्त्यश्वकः सुभद्रिकाङ्का
म्पीलवासिनीम् ॥ $\frac{१८}{२३}$ ॥ आत्मनो देवतां देवीमैश्वर्यसुखदायिनीम् वंशवृद्धिकरीं नित्यां धनदां हि कुलाम्बिकाम् ॥ ॐ भूर्भुवः स्वः आत्मनः कुल
देवतायै नमः आत्मनः कुलदेवतामावाहयामि स्थापयामि ॥ भो आत्मनः कुलदेवते इहागच्छ इह तिष्ठ ॥ ॐ मनोजूति० ॐ भूर्भुवः स्वः सगणा-
धिपगौर्यादिमातरः सुप्रतिष्ठिताः वरदाः भवत ॥ ॐ भूर्भुवः स्वः सगणाधिपगौर्यादिमातृभ्यो नमः इत्यनेन षोडशोपचारैः संपूजयेत् ॥ अथ मत्स्या[१]
दिसप्तजलमातॄणां पूजनम् —— ताम्रपात्रे प्रभूत जलं संपूर्य तत्र स्थापनं वा प्रभूतजलपूरितमणिकपात्रे अक्षतपुंजेषु वा स्थापनम् —— ॐ मत्स्यै नमः
मत्सीं आवाहयामि । ॐ कूर्म्यै नमः कूर्मीं आवाहयामि । ॐ वाराह्यै नमः वाराहीं आवाहयामि । ॐ माण्डुक्यै नमः माण्डुकीं आवाहयामि ॥
ॐ मकर्यै नमः मकरीं आवाहयामि । ॐ ग्राहक्यै नमः ग्राहकीं आवाहयामि । ॐ क्रौञ्चक्यै नमः क्रौञ्चकीं आवाहयामि ॥ ॐ मनोजूति० ॐ
भूर्भुवः स्वः मत्स्यादिसप्तजलमातरः सुप्रतिष्ठिताः वरदाः भवत ॥ ॐ भूर्भुवः स्वः मत्स्यादिसप्तजलमातृभ्यो नमः इत्यनेन षोडशोपचारैः पूजयेत् ॥

---

१ मत्सी कूर्मी च वाराही माण्डुकी मकरी तथा । ग्राहकी क्रौंचकी चैव सप्तैता जलमातरः ॥

अथब्राह्म्यादिसप्तस्थलमातॄणांपूजनम् । ॐब्राह्म्यैनमःब्राह्मींआवाहयामि । ॐमाहेश्वर्यैनमःमाहेश्वरींआवाहयामि । ॐकौमार्यैनमःकौमारींआवाहयामि । ॐवैष्णव्यैनमःवैष्णवींआवाहयामि ॥ ॐवाराह्यैनमःवाराहींआवाहयामि । ॐइन्द्राण्यैनमःइन्द्राणींआवाहयामि । ॐचामुण्डायैनमःचामुण्डांआवाहयामि । ॐमनोजूति० ॐभूर्भुवःस्वःब्राह्म्यादिसप्तस्थलमातरःसुप्रतिष्ठिताःवरदाःभवत । ॐभूर्भुवःस्वःब्राह्म्यादिसप्तस्थलमातृभ्योनमःइत्यनेनषोडशोपचारैःसंपूजयेत् ॥

अथजयन्त्यादिपञ्चद्वारमातॄणांपूजनम् । द्वारदक्षिणभागे–ॐजयन्त्यैनमःजयन्तींआवाहयामि । ॐमङ्गलायैनमःमङ्गलांआवाहयामि । ॐपिङ्गलायैनमःपिङ्गलांआवाहयामि । ततःद्वारवामभागे–ॐआनन्दवर्धिन्यैनमःआनन्दवर्धिनींआवाहयामि ॥ ॐमहाकाल्यैनमःमहाकालींआवाहयामि॥ ॐमनोजूति० ॐभूर्भुवःस्वःजयन्त्यादिपञ्चद्वारमातरःसुप्रतिष्ठिताःवरदाःभवत॥ ॐभूर्भुवःस्वःजयन्त्यादिपञ्चद्वारमातृभ्योनमःइत्यनेनषोडशोपचारैःसंपूजयेत् ॥

अथकीर्त्यादित्रयोदशग्रहमातॄणांपूजनम् । रक्तवस्त्रप्रसारितशूर्पेअक्षतपुञ्जेषु—ॐकीर्त्यैनमःकीर्तिंआवाहयामि । ॐलक्ष्म्यैनमःलक्ष्मींआवाहयामि । ॐधृत्यैनमःधृतिंआवाहयामि । ॐमेधायैनमःमेधांआवाहयामि । ॐपुष्ट्यैनमःपुष्टिंआवाहयामि । ॐश्रद्धायैनमःश्रद्धांआवाहयामि । ॐक्रियायैनमःक्रियांआवाहयामि । ॐमत्यैनमःमतिंआवाहयामि । ॐबुद्ध्यैनमःबुद्धिंआवाहयामि ॥ ॐलज्जावपुषेनमःलज्जावपुषंआवाहयामि ॥ ॐशान्त्यैनमःशान्तिआवाहयामि ॥ ॐतुष्ट्यैनमःतुष्टिंआवाहयामि ॥ ॐकान्त्यैनमःकान्तिआवाहयामि ॥ ॐमनोजूति० । ॐभूर्भुवःस्वःकीर्त्यादित्रयोदशग्रहमातरःसुप्रतिष्ठिताःवरदाःभवत ॥ ॐभूर्भुवःस्वःकीर्त्यादित्रयोदशग्रहमातृभ्योनमःइत्यनेनषोडशोपचारैःसंपूजयेत् ॥



---

१ ब्राह्मी माहेश्वरीचैवकौमारीवैष्णवी तथा । वाराहीचतथेन्द्राणीचामुण्डासप्तमातरः ॥ २ जयन्तीमङ्गलाचैवपिङ्गलादक्षिणेगृहात् । आनन्दवर्द्धिनीवामेमहाकालीचनिर्गमे ॥ गृहस्यदक्षिणेभागेतिस्रोलेख्यास्तुमातरः । वामभागेतथाद्वेचजयन्त्यादिक्रमेणतु ॥ ३ कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः । बुद्धिर्लज्जावपुः शान्तिस्तुष्टिः कान्तिस्तु मातरः ॥

अथश्र्यादिसप्तवसोर्द्धारापूजनम्—पात्रस्थेनविलीनेनसगुडेनघृतेनमातॄणांसंनिहितकुड्यलग्नाः दक्षिणाद्युदगपवर्गाः पश्चिमादिप्राग-पवर्गाः नातिनीचानचोच्छ्रिताः सप्तवसोर्द्धाराः कर्तव्याः तत्रमन्त्रः—ॐवसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वा ॥ ३/१ ॥ नमोस्तुवसुमातृभ्यो घृतमातृभ्यएवच। स्वयज्ञकार्यसिद्ध्यर्थंधारांदास्यामिमा-तरः ॥ इत्यनेनसप्तधारांकृत्वा ततःशिशुवारात् ऊर्ध्वभागगुडेनैकीकरणंतत्रमन्त्रः—ॐकामंधुक्षः ॥ ३/१ ॥ श्रीपूर्वसप्तमातृभ्योघृत मातृभ्यएवच । गुडेनमेलयिष्यामि ताःसर्वार्थप्रसाधिकाः ॥ इत्यनेनैकीकृत्यकुङ्कुमादिनाबिन्दुकरणेनालङ्कृत्यप्रतिधारायामेकैकदेवता मावाहयेत्—ॐमनसःकाममाकूतिंवाचःसत्यमशीय ॥ पशूनाःरूपमन्नस्यरसोयशःश्रीःश्रयतांमयिस्वाहा ॥ ४/३९ ॥ सुवर्णपद्मह-स्तांतांविष्णोर्वक्षःस्थलेस्थिताम् । त्रैलोक्यवल्लभांदेवींश्रियमावाहयाम्यहम् ॥ ॐश्रियैनमः श्रियं आवाहयामि ॥ श्रीश्चतेलक्ष्मीश्चप-त्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मइषाणसर्वलोकम्मइषाण ॥ २२/३१ ॥ शुभलक्षणसम्पन्नांक्षीरसागर सम्भवाम् । चन्द्रस्यभगिनींसौम्यांलक्ष्मीमावाहयाम्यहम् ॥ ॐलक्ष्म्यैनमः लक्ष्मींआवाहयामि ॥ ॐभद्रंरतिरिहरमध्वमिहधृतिरिहस्वधृ-तिःस्वाहा ॥ उपसृजन्धरुणंमात्रेधरुणोमातरन्धयन् ॥ रायस्पोषमस्मासुदीधरत्स्वाहा ॥ ५१/८ ॥ संसारधारणपरांधैर्यलक्षणसं-युताम् । सर्वसिद्धिकरींदेवींधृतिमावाहयाम्यहम् ॥ ॐधृत्यैनमः धृतिं आवाहयामि ॥ ॐमेधाम्मेवरुणोददातुमेधामग्निः प्रजाप-तिः ॥ मेधामिन्द्रश्चवायुश्चमेधान्धातादधातुमेस्वाहा ॥ १५/३२ ॥ सदसत्कार्यकरणक्षमांबुद्धिविशालिनीम् । ममकार्येशुभकरीम्मेधामा-वाहयाम्यहम् ॥ ॐमेधायैनमः मेधांआवाहयामि ॥ ॐदेवीजोष्ट्रीसरस्वत्यश्विनेन्द्रमवर्द्धयन् ॥ श्रोत्रन्नकर्ण्ययोर्यशोजोष्ट्रीभ्या-न्दधुरिन्द्रियंवसुवनेवसुधेयस्यव्यन्तुयज ॥ ५१/२१ ॥ सोमरूपांसुवर्णाभांपुत्रपुष्टिसुखप्रदाम् । भक्तेभ्यश्चापिवरदांपुष्टिमावाहयाम्यहम् ॥



१ श्रीश्च लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा सरस्वती । माङ्गल्येषु प्रपूज्यन्ते सप्तैता घृतमातरः ॥

ॐपुष्ट्यैनमः पुष्टिमावाहयामि॥ ॐव्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम्॥ दक्षिणाश्श्रद्धामाप्नोतिश्श्रद्धयासत्त्यमाप्यते ॥ ३०/१९ ॥ भूतग्राममिदंसर्वमजेनश्रद्धयाकृतम् । श्रद्धयाप्राप्यतेसत्यंश्रद्धामावाहयाम्यहम् ॥ ॐश्रद्धायैनमःश्रद्धांआवाहयामि ॥ ॐदेवीस्तिस्रस्तिस्रोदेवीःपतिमिन्द्रमवर्द्धयन् ॥ अस्पृक्षद्भारतीदिवंरुद्रैर्यज्ञ सरस्वतीडावसुमतीगृहान्वसुवनेवसुधेयस्यव्यन्तुयजं ॥ १८/२८ ॥ धातुश्चतुर्मुखीकण्ठशृङ्गारकविहारिणीम् । नित्यंप्रगल्भवाचालांवाणीमावाहयाम्यहम् ॥ ॐसरस्वत्यैनमः सरस्वतींआवाहयामि ॥ ॐ मनोजूति० ॥ ॐभूर्भुवःस्वःश्यादिसप्तवसोर्द्धाराःसुप्रतिष्ठिताःवरदाःभवत ॥ ॐभूर्भुवःस्वःश्यादिसप्तवसोर्द्धारादेवताभ्योनमः इत्यनेनषोडशोपचारैःपूजयेत् ॥ प्रार्थना—यदङ्गत्वेनभोदेव्यः पूजिताविधिमार्गतः । कुर्वन्तुकार्यमखिलंनिर्विघ्नेनक्रतूद्भवम् ॥ ततो यजमानः स्थापितमातृकंशूर्पंस्वयंगृहीत्वापत्न्याचाविघ्नकलशंग्राहयित्वा पत्न्यग्रतःसन्मण्डपतो गृहमध्ये देवस्याग्रे स्थापयेत् ॥ तद्वामपार्श्वे दीपं निदध्यात् ॥ इतिमातृकापूजनप्रयोगः ॥

अथायुष्यमंत्रजपः—आयुष्यंवर्चस्यमितित्रिवस्यदक्षऋषिःउष्णिक्शक्करीत्रिष्टुप्छन्दांसिहिरण्यंदैवतंआयुष्याभिवृद्ध्यर्थंजपेविनियोगः—ॐआयुष्यं वर्चस्यꣳरायस्पोषमौद्भिदम् ॥ इदꣳहिरण्यंवर्चस्वज्जैत्रायाविशतादुमाम् ॥ ५०/३४ ॥ नतद्रक्षाꣳसिनपिशाचास्तरन्तिदेवानामोजः प्रथमजꣳह्येतत् ॥ योबिभर्त्तिदाक्षायणꣳहिरण्यꣳसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः ॥ ५१/३४ ॥ यदाबध्नन्दाक्षायणाहिरण्यꣳशतानीकायसुमनस्यमानाः ॥ तन्मऽआबध्नामिशतशारदायायुष्मान्जरदष्टिर्यथासम् ॥ ५२/३४ ॥ पौराणाः—यदायुष्यंचिरंदेवाःसप्तकल्पान्तजीविषु । ददुस्तेनायुषासम्यक्जीवन्तुशरदःशतम् ॥ दीर्घानागानगानद्योनंतस्सप्तार्णवादिशः । अनन्तेनायुषा तेन जीवन्तु शरदः शतम् ॥ सत्यानि पञ्चभूतानि विनाशरहितानि च । अविनाश्यायुषा तद्वज्जीवन्तु शरदः शतम् ॥ इत्यायुष्यमंत्रजपः ॥

## ॥ अथनान्दीश्राद्धप्रयोगः ॥

अथनान्दीश्राद्धम् ॥ पात्रेप्राङ्मुखान् उदक्संस्थान् त्रीन्कुशबटून् दूर्वाकाण्डानि वासंस्थाप्य—सत्यवसुसंज्ञकाः विश्वेदेवाःनान्दीमुखाःॐभूर्भुवःस्वःइदंवःपाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॥ गोत्राःपितृपितामहप्रपितामहाःसपत्नीकाःनान्दीमुखाःॐभूर्भुवःस्वः

१ गौर्यादिमातृकापूजनंनान्दीश्राद्धाङ्गंयत्रनान्दीश्राद्धंनक्रियतेतत्रमातृकापूजनमपिनकार्यम् ॥ अत्रश्राद्धेनापसव्यंनतिलाः नचपितृतीर्थेनदानम् ॥ पितॄणांरूपमास्थायदेवाअन्नंसमश्नुते ॥ तस्मात्सव्येनदातव्यंवृद्धिश्राद्धेतुनित्यशः ॥ यथैवोपचरेद्देवांस्तथावृद्धौपितॄनपि ॥ अस्य-आभ्युदयिकश्राद्धमित्यपरःपर्यायः ॥ अस्यार्थः—पुत्रजन्मविवाहादिरूपोऽभ्युदयस्तस्मिन्सतिक्रियमाणंश्राद्धंआभ्युदयिकशब्देनोच्यते ॥ पूर्वाह्णेआभ्युदयिकंविधेयम् ॥ अत्रपूर्वाह्णस्त्रेधाविभक्तस्याह्नःप्रथमोभागः ॥ पूर्वाह्णोवैदेवानांमध्यन्दिनोमनुष्याणामपराह्णःपितॄणाम् ॥ पुत्रजन्मादौतुतत्कालएवनतत्रपूर्वाह्णनियमः ॥ यथा—नियतेषुनिमित्तेषुप्रातर्वृद्धिनिमित्तकम् । तेषामनियतत्वेतुतदानन्तर्यमिष्यते ॥ २ कुशबटूनांमुखकल्पनाअग्रेणकार्या—इतिरुद्रकल्पद्रुमे ॥ दूर्वाकाण्डानिवास्थापनीयानिमुखकल्पनाऽत्रापिअग्रेणकार्या ॥ हेमाद्रौशातातपः—सव्येनचोपवीतेनकृजुदर्भैश्चधीमता । कर्तव्यंचाभ्युदयिकंश्राद्धमभ्युदयार्थिना ॥ नान्दीश्राद्धंत्रिविधं—विवाहादिनित्यंनैमित्तिकंपुत्रजन्माद्यनियतनिमित्तंअग्न्याधानादिनिमित्तंचेति ॥ तत्रविवाहादिनिमित्तंप्रातःकार्यंतदाहशातातपः—प्रातर्वृद्धिनिमित्तकम् ॥ अत्रप्रातःशब्दःसार्द्धप्रहरात्मककालवचनः ॥ तदाहगार्ग्यः—ललाटसम्मितेभानौप्रथमःप्रहरःस्मृतः । सएवसार्द्धसंयुक्तःप्रातरित्यभिधीयते ॥ अग्न्याधाननिमित्तंत्वपराह्णेकार्यंतदाहगालवः—पार्वणंचापराह्णेतुवृद्धिश्राद्धंतथाग्निकम् ॥ पुत्रजन्मादौनिमित्तानन्तरमेवतत्कार्यम् ॥ ३ सङ्कल्पवाक्यंप्रथमान्तमेवात्रप्रयोज्यंतत्रप्रमाणम्—शुभार्थेप्रथमान्तेनवृद्धौसङ्कल्पमाचरेत् नषष्ठ्यायादिवाकुर्यान्महादोषोभिजायते ॥ इतिपारस्करगृ०गदाधरभाष्येचोक्तत्वादत्रआसनदानेगन्धादिदानेभोजननिष्क्रयद्रव्यदानेसक्षीरयवमुद्रकदानेचसर्वत्रप्रथमायोज्या ॥ नान्दीश्राद्धादन्यत्रश्राद्धेषुतु—सङ्कल्पासनयोःषष्ठीद्वितीयाऽवाहने तथा । अन्नदाने ( पिंडदाने ) चतुर्थीस्याच्छेषेसंबोधनंतथा ॥ तथाच—अक्षय्यासनयोःषष्ठीद्वितीयाऽवाहनेतथा ॥ अन्नदानेचतुर्थीस्याच्छेषाःसंबोधनास्तथा ॥ एतानितुअन्यश्राद्धपराणिनतुवृद्धिश्राद्धपराणि ॥ वृद्धिश्राद्धेतुप्रथमाएव॥ केचन–शुभार्थेप्रथमान्तेनेतिप्रमाणंशाखान्तरंमत्वाषष्ठ्यादिविभक्त्याकुर्वन्तितत्रमूलंमृग्यम् ॥ अनस्मच्छूद्रशब्दानामरूपाणामगोत्रिणाम् । अनाम्नामतिलाद्यैश्चनान्दीश्राद्धञ्चसव्यवत् ॥ अकृत्वामातृकापूजांवृद्धिश्राद्धंकरोतिचेत् । तास्तस्यक्रोधसंपन्नाहिंसांकुर्वन्तिदारुणाम् ॥

इदंवःपाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॥ द्वितीयगोत्राःमातामहप्रमातामहवृद्धप्रमातामहाःसपत्नीकाःनान्दीमुखाःॐभूर्भुवःस्वः इदंवः पाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॥ हस्तेजलमादाय–अद्यपूर्वोच्चरित० अमुककर्माङ्गत्वेनसाङ्कल्पिकविधिनानान्दीश्राद्धंकरिष्ये ॥ आसनदानम्–+ सत्यवसुसंज्ञकाःविश्वेदेवाःनान्दीमुखाःइदंवआसनंनान्दीश्राद्धेक्षणौक्रियेताम् ॥ * ॐतथा ॥ + प्राप्नुतांभवन्तौ ॥ * प्राप्नवाव ॥ + गोत्राःपितृपितामहप्रपितामहाःसपत्नीकाःनान्दीमुखाःॐभूर्भुवःस्वःइदंवआसनंनान्दीश्राद्धेक्षणाःक्रियन्ताम् ॥ * ॐ तथा ॥ प्राप्नुवन्तुभवन्तः ॥ प्राप्नवाम । द्वितीयगोत्राःमातामहप्रमातामहवृद्धप्रमातामहाःसपत्नीकाःनान्दीमुखाःॐभूर्भुवःस्वःइदंवआसनं नान्दीश्राद्धेक्षणाःक्रियन्ताम् ॥ ॐतथा ॥ प्राप्नुवन्तुभवन्तः ॥ प्राप्नवाम ॥ गन्धादिदानम्– सत्यवसुसंज्ञकाःविश्वेदेवाःनान्दीमुखाःइदंवोगन्धाद्यर्चनंस्वाहा संपद्यतांवृद्धिः ॥ गोत्राःपितृपितामहप्रपितामहाःसपत्नीकाःनान्दीमुखाःइदंवोगन्धाद्यर्चनंस्वाहासंपद्यतांवृद्धिः ॥ द्वितीयगोत्राःमातामहप्रमातामहवृद्धप्रमातामहाःसपत्नीकाःनान्दीमुखाःइदंवोगन्धाद्यर्चनंस्वाहासंपद्यतांवृद्धिः ॥ भोजननिष्क्रयद्रव्यदानम्–

---

१ हेमाद्रौसंवर्तः––समग्रंयस्तुशक्नोतिकर्तुंनैवेहपार्वणम् । अपिसङ्कल्पविधिनाकालेतस्याविधीयते ॥ स्मृतिरत्नावल्याम्–वृद्ध्यनंतरभाविनिवृद्धावपिपिण्डदानस्यप्रतिषिद्धत्वात्तादृशस्थलेपिण्डनिषेधान्यथाऽनुपपत्याभियुक्तैःसङ्कल्पश्राद्धानुष्ठानस्यैवौचित्यस्वीकारः ॥ हेमाद्रौषड्विंशन्मते–अनग्निकोयदाविप्रउच्छिन्नाग्निरथापिवा । तदावृद्धिषुसर्वासुसाङ्कल्पंश्राद्धमाचरेत् ॥ इत्यादिप्रमाणादनग्निकोच्छिन्नाग्निकर्तृकासुसर्वासुवृद्धिषुसङ्कल्पश्राद्धस्यैवविहितत्वात्साङ्कल्पिकाभ्युदयिकश्राद्धप्रयोगोत्रास्माभिःप्रयोजितः ॥ साङ्कल्पिकश्राद्धस्वरूपमाहहेमाद्रौसंवर्तः–पात्रभोज्यस्यचान्नस्यत्यागः सङ्कल्पउच्यते । तत्प्रयुक्तोविधिर्यस्तुयत्तेनव्यपदिश्यते ॥ तावन्मात्रेणसम्बद्धंश्राद्धंसाङ्कल्पमुच्यते ॥ पिण्डहीनःश्राद्धशब्दःसङ्कल्पश्राद्धपर्यायः ॥ साङ्कल्पिकेसमंत्रकावाहनार्घाग्नौकरणपिण्डदानविकिराक्षय्यस्वधावाचनप्रश्नेत्येतत्सप्तकंवर्ज्यम् ॥ + कर्तावदेत् ॥ * विप्रोच्चारः ॥

२ केचनमातृपूर्वकंपार्वणत्रयविधिनावृद्धिश्राद्धंकुर्वन्तितदन्यशाखाविषयम् ॥ मातृश्राद्धन्तुपूर्वंस्युःकर्माहानितुपैतृकम् । मातामहंचोत्तरेद्युर्वृद्धौश्राद्धत्रयंस्मृतम् ॥ मातृश्राद्धन्तुपूर्वाह्णेमध्याह्नेपैतृकंतथा । ततोमातामहानांचवृद्धौश्राद्धत्रयंस्मृतम् ॥ इतिहेमाद्र्यादिनिबन्धधृतैःशातातपगार्ग्यादिस्मृतिवाक्यैः कालभेदाद्भिन्नप्रयोगाणित्रीणिश्राद्धान्युक्तानितानितुयेषांसूत्रेआभ्युदयिकेविशेषतः पार्वणत्रयविधिरस्तिपार्वणद्वयोर्विध्यभावोस्तितच्छाखाविषयाणि ॥ यत्रहिमात्रादिश्राद्धत्रयविधिःकालत्रयस्तितत्रैवानुकल्पतयाकालैकत्वेनाविधियुक्तः ॥ नहिकात्यायनसूत्रादौकालत्रयमात्रादिश्राद्धत्रयविधिरस्तितस्माद्वाजसनेयिभिरेकस्मिन्पूर्वाह्णएवैकप्रयोगपार्वणद्वयात्मकमाभ्युदयिकंश्राद्धमनुष्ठेयम् ॥ तथाहि–वाजसनेयिनामपिकवचन

सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः युग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयीभूतं किञ्चिद्धिरण्यं दत्तं अमृतरूपेण वः स्वाहा संपद्यतां वृद्धिः ॥
गोत्राः पितृपितामहप्रपितामहाः सपत्नीकाः नान्दीमुखाः युग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयीभूतं किञ्चिद्धिरण्यं दत्तं अमृतरूपेण वः स्वाहा

---

निर्देशादेकस्मिन्पूर्वाह्णे आभ्युदयिकं कार्यमित्यर्थकात्पूर्वाह्ण इति सूत्रादाभ्युदयिकश्राद्धस्यैव पूर्वाह्णकालसाध्यतावगमात् ॥ यदि तु मात्रादित्रीणि श्राद्धानि सूत्रकृता उक्तानि स्युस्तदा तेषां दिनत्रयसाध्यता पूर्वाह्णादिकालत्रयसाध्यता वा स्यात् ॥ न च सूत्रकृता त्रीणि श्राद्धान्युक्तानि किन्तु पितृमातामहपार्वणद्वयात्मकं श्राद्धद्वयमेवोक्तम् ॥ मात्रादिश्राद्धानां कालभेदात्प्रयोगभेदो भविष्यति । सूत्रकारस्तु द्वयोः श्राद्धयोः प्रयोगैकत्वं दर्शयति ॥ यथा सूत्रम्–नान्दीमुखाः पितरः पितामहाः प्रपितामहाः सपत्नीकाः मातामहाः प्रमातामहा वृद्धप्रमातामहाः सपत्नीकाश्च प्रीयन्ताम् ॥ अत्र हि पूर्वाह्णरूपकालैक्यात्प्रयोगैकये न षट्दैवतं पार्वणद्वयात्मकमाभ्युदयिकं श्राद्धमुक्तं षड्गणामुपादानात् छन्दोगपरिशिष्टे कात्यायनः—आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः । षड्भ्यः पितृभ्यस्तदनुभक्त्या श्राद्धमुपक्रमेत् ॥ इत्यनेन षड्दैवतं अभ्युदयिकं उक्तम् ॥ तथा च–स्वेन भर्त्रा समं भुंक्ते माता श्राद्धं सुधासमम् । पितामही च स्वेनैव स्वेनैव प्रपितामही ॥ न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते । स्वभर्तृपिण्डदानाच्चतृप्तिरासां यतः स्मृता ॥ इति छन्दोगपरिशिष्टे कात्यायनेन मातृभ्यः पृथक्त्वेन श्राद्धप्रदानं प्रतिषिद्धम् ॥ तस्माद्वाजसनेयिभिः षड्दैवत्यमेवैकप्रयोगमभ्युदयिकं श्राद्धं कर्तव्यमिति राद्धान्तः ॥

१ हेमाद्रौ शङ्खः–इष्टिश्राद्धं क्रतुर्दक्षौ सत्यौ नान्दीमुखे वसू ॥ अत्र सत्यवस्वोः समुदितयोरेवाग्नीषोमवद्देवतात्वं न तु देवतयोः समुच्चयः तेनात्र न ब्राह्मणद्वये प्रत्येकमेकैकस्य प्रयोगः ॥ अत्र ऋजवो दर्भा भवन्ति न द्विगुणाः अत्र तिलार्थाः सर्वे यवैः कार्याः ॥

२ वृद्धिश्राद्धकर्तुर्जीवत्पितृकत्वे निर्णयः-पितृवर्गं मातृवर्गं तथा मातामहस्य च । जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेत् ॥ इति वचनाज्जीवत्पितृकः स्वापत्यसंस्कारेषु पितृवर्गं नाम पितृपितामहप्रपितामहांश्च त्यक्त्वा मातृमातामहपार्वणयुतं नान्दीश्राद्धं कुर्यात् एवं मातरि जीवत्यां मातृवर्गं परित्यज्य मातामहपार्वणमेव मातामहे जीवति मातृपार्वणकमेव केवलमातृपार्वणे विश्वेदेवा न कार्याः ॥ वर्गत्रयाद्येषु मातृपितृमातामहेषु जीवत्सु नान्दीश्राद्धलोप एव सुतसंस्कारेषूचितः ॥ द्वितीयविवाहाधानपुत्रेष्टिसोमयागादिषु स्वसंस्कारकर्मसु–वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥ एवं मृतमातृमातामहकोऽपि जीवत्पितृकः स्वसंस्कारे–पितुः पितृपितामहप्रपितामहाः सपत्नीकाः ॥ पितुर्मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः एवमुद्दिश्य श्राद्धं कुर्यात् ॥ न तु स्वमातृमातामहपार्वणोद्देशः ॥ पितरि पितामहे च जीवति स्वसंस्कारे पितामहस्य मातृपितामहीप्रपितामह्य इत्याद्युद्देशः ॥ एवं प्रपितामहेऽपि योज्यम् ॥ पितुर्मात्रादिजीवने तत्पार्वणलोप एव ॥ येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः इति पक्षस्य वर्गाद्यजीवने तत्पार्वणलोप इति द्वारलोपपक्षस्य च स्वसंस्कारस्वापत्यसंस्कारभेदेन व्यवस्था सिद्धान्तिता ॥

संपद्यतांवृद्धिः ॥ द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः युग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयीभूतंकिञ्चिद्धिरण्यंदत्तंअमृतरूपेणवः स्वाहासंपद्यतांवृद्धिः॥सक्षीरयवमुदकदानम्—सत्यवसुसंज्ञकाः विश्वेदेवाःनान्दीमुखाः प्रीयन्ताम्॥गोत्राः पितृपितामहप्रपितामहाःसपत्नीकाःनान्दीमुखाः प्रीयन्ताम्॥ द्वितीयगो :मातामहप्रमातामहवृद्धप्रमातामहाःसपत्नीकाःनान्दीमुखाः प्रीयन्ताम् ॥ आशीर्ग्रहणम्—अघोराःपितरःसन्तु ॥ सन्त्वघोराःपितरः ॥ गोत्रंनोवर्धताम् ॥ वर्धतांवोगोत्रम् ॥ दातारोनोभिवर्द्धन्ताम् ॥ अभिवर्द्धन्तांवोदातारः॥वेदाश्चनोभिवर्द्धन्ताम् ॥ वर्द्धन्तांवोवेदाः ॥ सन्ततिर्नोभिवर्द्धताम् ॥ वर्द्धतांवःसन्ततिः॥श्रद्धाचनोमाव्यगमत् ॥ माव्यगमद्वःश्रद्धा ॥ बहुदेयंचनोस्तु ॥ अस्तुवोबहुदेयम् ॥ अन्नंचनोबहुभवेत् ॥ भवतुवोबह्वन्नम् ॥ अतिथींश्चलभेमहि ॥ अतिथींश्चलभध्वम्॥याचितारश्चनःसन्तु॥सन्तुवोयाचितारः॥एताआशिषःसत्याःसन्तु॥सन्त्वेताःसत्याआशिषः ॥दक्षिणादानम्—सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्योनान्दीमुखेभ्यःकृतस्यनान्दीश्राद्धस्यफलप्रतिष्ठासिद्ध्यर्थंद्राक्षामलकयवमूलनिष्क्रयीभूतांदक्षिणांदातुमहमुत्सृजे ॥ गोत्रेभ्यःपितृपितामहप्रपितामहेभ्यःसपत्नीकेभ्योनान्दीमुखेभ्यः कृतस्यनान्दीश्राद्धस्यफलप्रतिष्ठासिद्ध्यर्थंद्राक्षामलकयवमूलनिष्क्रयीभूतांदक्षिणांदातुमहमुत्सृजे ॥ द्वितीयगोत्रेभ्यःमातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्योनान्दीमुखेभ्यःकृतस्यनान्दीश्राद्धस्यफल

---

१ मृतपितृकस्यजीवन्मातृमातामहस्यापितुःपार्वणेनैवनान्दीश्राद्धसिद्धिः ॥ समावर्तनस्यमाणवककर्तृकत्वेपितदङ्गभूतनान्दीश्राद्धेपितुःतदभावेज्येष्ठभ्रातादेराधिकारःकेषांचिन्मतेतत्रपितापुत्रसमावर्तनेस्वपितृभ्योनान्दीश्राद्धंकुर्यात् ॥ पिताजीवत्पितृकश्चेत्सुतसंस्कारत्वात्द्वारलोपपक्षोयुक्तः ॥ माणवकपितुःप्रवासादिनाअसन्निधानेभ्रात्राद्यधिकारिभिः—माणवकस्यपितुर्मातृपितामहीप्रपितामह्यइत्याद्युच्चार्यश्राद्धंकर्तव्यम् ॥ मृतपितृकमाणवकसमावर्तनेपितृव्यभ्रात्रादिः—अस्यमाणवकस्यमातृपितामहीत्याद्युच्चारयेत् ॥ भ्रात्रादेरभावेस्वयमेवस्वपितृभ्योदद्यात् ॥ एवंजीवत्पितृकःपितुरसन्निधानेभ्रात्रादेरभावेचपितुःपितृभ्यःस्वयमेवनान्दीमुखंकुर्यादुपनयनेनकर्माधिकारसिद्धत्वादेवंविवाहेपिबोध्यम् ॥ मृतपितृकस्यचौलोपनयनादिकंपितृव्यादिकुर्वन्नस्यसंस्कार्यस्यापितृपितामहप्रपितामहाःइत्याद्युच्चार्यश्राद्धंकुर्यात् ॥ जीवतः पितुरसंनिधानेनकुर्वन्—अस्यसंस्कार्यस्यपितुःपितृपितामहप्रपितामहाःइत्याद्युच्चार्यंकुर्यात् ॥

प्रतिष्ठासिद्ध्यर्थंद्राक्षामलकयवमूलनिष्क्रयीभूतांदक्षिणांदातुमहमुत्सृजे ॥ नान्दीश्राद्धंसंपन्नम् ॥ सुसंपन्नम् ॥ विसर्जनम्—ॐवाजेवाजे वतवाजिनोनोधनेषुविप्राऽअमृताऽऋतज्ञाः ॥ अस्यमध्वः पिबतमादयध्वन्तृप्तायातपथिभिर्देवयानैः ॥[१८] ॥ अनुव्रजेत्—ॐआमावाजं स्यप्रसवोजगम्याद्देमेद्यावापृथिवीविश्वरूपे॥आमागन्तांपितरामातराचामासोमोऽअमृतत्वेनगम्यात्॥[१९] ॥हस्तेजलमादाय—मयाच रितेऽस्मिन्साङ्कल्पिकनान्दीश्राद्धेन्यूनातिरिक्तोयोविधिःसउपविष्टब्राह्मणानांवचनाच्छ्रीनान्दीमुखप्रसादाच्चसर्वःपरिपूर्णोस्तु॥अस्तुप रिपूर्णः ॥ इतिसाङ्कल्पिकविधिनानान्दीश्राद्धप्रयोगः ॥

---

१ आभ्युदयिकश्राद्धोत्तरंमंडपोद्वासनावधिनिषेधानाहगार्ग्यः—नान्दीश्राद्धेकृतेपश्चाद्यावन्मातृविसर्जनम् । दर्शश्राद्धंक्षयश्राद्धंस्नानंशीतोदकेनच ॥ अपसव्यंस्वधाकारंनित्यश्राद्धंतथैवच । ब्रह्मयज्ञंचाध्ययनंनदीसीमातिलंघनम् ॥ उपवासव्रतंचैवश्राद्धभोजनमेवच । नैवकुर्युःसपिण्डाश्चमण्डपो द्वासनावधि॥ अत्रसापिण्ड्यंत्रिपुरुषपर्यन्तंज्ञेयम् ॥ अत्रनित्यश्राद्धनिषेधेनतत्कार्यविहितपितृयज्ञनिषेधसिद्धेःस्वधाकारग्रहणंतत्सहितवैश्वदेवनिषे धार्थम् ॥ कर्मप्रदीपे—कृतेचाभ्युदयश्राद्धेमातृकोत्थापनंविना । नद्वितीयंनान्दीमुखंप्रकुर्यात्पुत्रजन्मनि ॥ तथैवाभ्युदयंकार्यंराज्ञःपट्टाभिषेचने ।अन्य थाकुरुतेमोहादपमृत्युकरंपरम् ॥ शास्त्रार्थप्रदीपे—मण्डपोद्वासनात्पूर्वंनान्दीश्राद्धेकृतेपुनः।येकुर्वन्तिनरामोहादपमृत्युंव्रजन्तिते ॥ अयंनिषेधोपित्रि पुरुषसापिण्डपर्यंतमेवेतिपुरुषार्थचिन्तामणौ॥

## ॥ अथनान्दीश्राद्धेविशिष्टनिर्णयः ॥

रजोदोषजननाशौचादिसंभावनायांनान्दीश्राद्धस्यापकृष्यानुष्ठानेदिनावधिः—एकविंशत्यहर्यज्ञेविवाहेदशवासराः । त्रिषट्चौलोपनयने नान्दीश्राद्धंविधीयते ॥ दशाहिनाद्यतिक्रमेपुनर्नान्दीश्राद्धमित्यर्थात्सिद्धम् ॥ नान्दीश्राद्धोत्तरंसूतकमृतकयोःप्राप्तौनविवाहादिप्रतिबंधः—विवाह व्रतयज्ञेषुश्राद्धेहोमेऽर्चनेजपे । आरब्धेसूतकंनस्यादनारब्धेतुसूतकम् ॥ प्रारम्भोवरणंयज्ञेसंकल्पोव्रतसत्रयोः । नान्दीमुखंविवाहादौश्राद्धेपाकपरि क्रिया ॥ इदंसन्निहितमुहूर्तान्तराभावादिसंकटएवज्ञेयम् ॥ संकटाभावेतुनान्दीश्राद्धेजातेऽपिसूतकान्तेमुहूर्तान्तरएवमङ्गलंसर्वोप्याशौचापवादोऽ नन्यगतित्वेआर्तौचज्ञेयः ॥ तेनव्रतेसंकल्पोत्तरमाशौचेऽपिविप्रद्वारैवपूजादि ॥ यज्ञादौमधुपर्कविधिनावरणोत्तरमपिऋत्विगन्तरालाभादिकेऽनन्य गतौसंकटएवमधुपर्कविधिनाव्रतस्याशौचाभावः एवंजपहोमादावप्यूह्यम् ॥ श्राद्धेपाकपरिक्रियापाकप्रोक्षणम् ॥ एतदप्यार्तिसत्त्वेमहासंकटे प्रारंभात्प्रागपिसूतकप्राप्तौकूष्मांडमंत्रैर्घृतहोमंकृत्वापयस्विनींगांदत्वापञ्चगव्यंप्राश्यशुद्धश्चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत् ॥ उपकल्पितबहुसं भारस्यसन्निहितलग्नान्तराभावेननाशाद्यापत्तावप्येवंशुद्धिः । इदंजननाशौचमात्रविषयमितिमार्तण्डादौ ॥

अनेकसंस्कार्यविषयानेकसंस्काराणांसहानुष्ठानंयत्रननिषिद्धंतदङ्गभूतवृद्धिश्राद्धविषये—गणशःक्रियमाणानामेकंस्यान्मातृपूजनम् वृद्धिश्राद्धंचतन्त्रंस्याद्धोमस्तुस्यात्पृथक्पृथक् ॥ परकीयकन्योद्वाहे—आत्मीकृत्यसुवर्णेनपरकीयांतुकन्यकाम्॥धर्मेणविधिनादातुःसमगोत्रोऽपियुज्यते ॥ अनाथांकन्यकांदत्त्वासदृशेवाऽधिकेवरे। द्विगुणंफलमाप्नोतिकन्यादानेयदीरितम् ॥ इतिवचनाद्वाकेनापिहेतुनाकन्यांदातुमशक्नुवतादानाधिकारिणात्वंकन्यादानंकुर्विंतिप्रार्थनाद्वायःपरकीयांकन्यांदातुमिच्छतिसोऽपिसंस्कार्यकन्यायाः पित्रादीनुद्दिश्यतस्याजीवत्पितृकत्वेतदीयमात्राद्युद्देश्ययथासंभवंवृद्धिश्राद्धंकुर्यात् ॥ रुद्रकल्पद्रुमे—दत्तकपुत्रस्तुयदिलब्धबीजिरिक्थस्तदोभौपितरौपितामहौप्रपितामहौचोद्दिश्यकुर्यादेवंमातृपार्वणेमातामहपार्वणेचबोध्यंबीजिरिक्थग्रहणेऽधिकार्यन्तरसंभवात्—गोत्ररिक्थेजनयितुर्नभजेद्दत्रिमःसुतः ॥ इतिशास्त्रादलब्धतद्रिक्थस्तदाप्रतिगृहीतृकुलसंबद्धपित्राद्युद्देश्यकमेवकुर्यात्॥मातृजीवनेसपत्नमातृमरणेनमातृपार्वणंएवंमातामह्याजीवनेमातामहीसपत्न्यामरणेऽपिनमातामहादेःसपत्नीकत्वम्॥ विवाहादिमङ्गलकर्माङ्गवृद्धिश्राद्धेकुशस्थाने दूर्वाः ॥ नान्दीश्राद्धपूर्वकंकूष्माण्डहोमादिनाशुद्धिसम्पादनोत्तरंरजोदोषसूतकप्राप्तौनिर्णयः—

कूष्मांडहोमादिनाशुद्धिपूर्वकंसूतकमृतकयोर्मध्यआरब्धेविवाहादौविप्राणांपूर्वसंकल्पितान्नभोजनेदोषोन ॥ पाकपरिवेषणादिकमपिसूतकिभिःकार्यंहोमादिविधिनाशुद्धिसंपादनादितिकौस्तुभेस्थितंनैतद्युक्तंलोकविद्विष्टत्वात्अतःपरगोत्रैरेवान्नदानंयुक्तंभाति ॥ नान्दीश्राद्धोत्तरंसूतकमृतकयोःप्राप्तौपूर्वमन्नसंकल्पाभावेपिविवाहोत्तरकालसंकल्पितान्नभोजनंविप्रैःकार्यम् ॥ अत्रापिपरैरन्नंप्रदातव्यंभोक्तव्यंचद्विजोत्तमैः ॥ इतिसर्वसंमतम् ॥ परैरसगोत्रैरितिसिंधुमयूखादौव्याख्यानात् ॥ पूर्वसंकल्पितान्नस्यापिभोजनसमयेसूतकप्राप्तौभोक्तृभिर्भुक्तशेषंत्यक्त्वापरगृहोदकैराचान्ततादिविधेयम् ॥ पाकशेषःसूतकिभिर्भोक्तव्यः ॥ भुंजानेषुचविप्रेषुत्वन्तरामृतसूतके ॥ अन्यगेहोदकाचान्ताइतिस्मृतेः ॥ नान्दीश्राद्धोत्तरंभोजनादन्यकालेसूतकप्राप्तौसूतकिगृहेभोक्तव्यम् ॥ भुंजानेषुसूतकप्राप्तौभोक्तृभिःपात्रस्थमप्यन्नंत्याज्यमितिवाचनिकएवविशेषः ॥ नाहिवचनस्यातिभारइतिन्यायात् ॥ ममतुभुञ्जानेष्वितिवाक्यमारब्धानारब्धसर्वकर्मसुअसंकल्पितान्नविषयमितिभाति ॥ इतिविवाहादौरजोदोषसूतकप्राप्तिनिर्णयः ॥

मौंजीविवाहादौमंडपोद्वासनात्पूर्वंदर्शादिनिर्णयः—मौंजीविवाहयोर्नान्दीश्राद्धमारभ्यमंडपोद्वासनपर्यन्तंमध्येदर्शादिनंयथानपतेत्तथाकार्यम् ॥ दर्शान्यतिपित्रोःक्षयादिश्राद्धादिनंयदिज्ञानादज्ञानाद्वापततितदात्रिपुरुषसपिंडैर्विवाहादिमंगलसमाप्त्युत्तरंश्राद्धंकार्यम् ॥एवंचदर्शान्यश्राद्धस्यैवस्वरूपतोविवाहमध्येनिषेधः नतुदर्शवच्छ्राद्धरहितस्यापिश्राद्धतिथिमात्रस्यवृत्तविवाहपरतस्तुकुर्याच्छ्राद्धमित्याद्युक्तेः एतेनसंक्रान्तिमन्वाद्यष्टकादिदिनानांश्राद्धदिनत्वाद्दर्शवन्मध्येपातोनिषिद्धइतिशंकानिरस्तातेनषण्णवतिश्राद्धकर्तृभिःसपिंडैर्मध्यपतितमन्वादेःप्रायश्चित्तादिनासंपत्तिःसंपाद्या ॥

## ॥ अथ आचार्यादिऋत्विग्वरणम् ॥

एकस्मिन्ताम्रपात्रेशरावेवाआपःक्षीरंकुशाग्राणिदधिचन्दनंअक्षताःदूर्वासर्षपाश्चेत्यष्टद्रव्याणि[1]निक्षिप्यआचारात्पूगीफलंचनिक्षिप्यपात्रान्तरेण पिधाय रक्तसूत्रेण संवेष्ट्य साचार्यविप्राः ॐपुण्याहमिति त्रिर्वदन्तः सपत्नीकयजमानहस्ते दद्युः सपत्नीको यजमानः स्वासनादुत्थाय ब्राह्मणान्प्रार्थयेत्—पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः ।. अनुगृह्णन्तु मामद्य ग्रहशान्त्याख्यकर्मणि ॥ स्वस्वकर्मरता ।नित्यं वेदशास्त्रार्थकोविदाः । श्रोत्रियाः सत्यवाचश्च देवध्यानरताः सदा ॥ यद्वाक्यामृतसंसिक्ता वृद्धिंयान्ति नरद्रुमाः । अङ्गीकुर्वन्तु मत्कर्मकल्पद्रुमसमाशिषः ॥ यथोक्तनियमैर्युक्ता मन्त्रार्थे स्थिरबुद्धयः । यत्कृपालोकनात्सर्वाऋद्धयो. वृद्धिमाप्नुयुः ॥ आयुरारोग्यपुत्रादि सुखश्री प्राप्तये मम । आपद्विघ्नविनाशाय शत्रुबुद्धिक्षयाय च ॥ आदित्याद्याग्रहाः सर्वे राहुकेतुपुरःसराः । ग्रहदेवाधिदेवैश्च नक्षत्राणां च देवतैः ॥ इन्द्रादिभिश्चदिक्पालैर्ब्रह्मविष्णुमहेश्वरैः । वास्तुदुर्गागणेशैश्च क्षेत्रपालेन संयुतैः ॥ भौमान्तरिक्षदेवैश्च कुलदेव्या च मातृभिः । चतुर्भिश्चैव वेदैश्च रुद्रेण सहितस्तथा ॥ स्वागतं वो द्विजश्रेष्ठा मदनुग्रहकारकाः । अयमर्घ्य इदं पाद्यं भवाद्भिः प्रतिगृह्यताम् ॥ चरणक्षालनाद्देवास्तुष्यन्ति शुद्धमानसाः । तज्जलेन च संसिक्ताः पूर्णाः कामा भवन्तु मे ॥ इमं वोऽर्घ्यं प्रयच्छामि गृह्णन्तु प्रीतमानसाः । पावयन्तु च मां नित्यं पूरयन्तु मनोरथान् ॥ अन्यः कश्चिद्ब्राह्मणः वदति—अर्घोऽर्घोऽर्घः यजमानो वदेत्—प्रतिगृह्यन्ताम् ॥ इत्युक्त्वा ब्राह्मणहस्ते तदग्रेवाअर्घंस्थापयेत् ॥ ब्राह्मणावदेयुः—प्रतिगृह्णीमः ॥ यजमानः हस्ते पूगीफलं गृहीत्वा वदेत्—अमुकप्रवरान्वित अमुकगोत्रः शुक्लय

---

१ केचन ब्रह्मणोवरणपूर्वकं आचार्यादीनां वरणमाचरन्तितदयुक्तम् ॥ वसिष्ठः—यजमानःशुचिःस्नातःश्रद्धायुक्तोजितेन्द्रियः ॥ पादशौचार्घवस्त्राद्यैराचार्यादीन्समर्चयेत् ॥ इत्युक्तत्वात्आचार्यपूर्वकमेवब्रह्मादिऋत्विजांवरणम् ॥ पादशौचार्घवस्त्राद्यैरित्युक्तत्वात्पादार्घकरणमप्यावश्यकम् ॥ आपःक्षीरंकुशाग्राणिदधिचन्दनमक्षताः । दूर्वासिद्धार्थकाश्चेति ह्यष्टाङ्गो ह्यर्घउच्यते ॥ अथवा—दधि दुग्धं यवा दूर्वा गन्धाः सिद्धार्थसंयुताः । जलपुष्पसमायुक्ताः पादार्घो ह्येभिरष्टभिः ॥

जुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायी अमुकशर्मा यजमानोहं अमुकप्रवरान्वितअमुकगोत्रं शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीय शाखाध्यायिनंअमुकशर्माणंब्राह्मणंअस्मिन्ग्रहशान्त्याख्येकर्मणिआचार्यत्वेनत्वामहंवृणेइत्युक्त्वा पूगीफलं दद्यात् ॥ यजमानेन दत्तं पूगीफलं गृहीत्वा वदेत्—ॐवृतोस्मि ॥ ॐव्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ॥ ३०/१९ ॥ व्रताय एतत्ते पाद्यं पादावनेजनं पादप्रक्षालनं एषतेऽर्घः ॥ गन्धाक्षतपुष्पमालादिभिः संपूज्य हस्ते रक्तसूत्ररूपकङ्कणबन्धनम्—ॐयदाबध्नन्दाक्षायणाहिरण्यꣳशतानीकायसुमनस्यमानाः ॥ तन्मऽआबध्नामिशतशारदायायुष्मान्जरदष्टिर्यथासम् ॥ ५२/३४ ॥ यथाशक्तिसुवर्णहस्तमुद्रालङ्कारवस्त्रोपवस्त्रासनोपवीतादिवरणसामग्रींदत्वावदेत्—आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः । तथात्वंग्रहयज्ञेस्मिन् आचार्यो भव सुव्रत ॥ यावत्कर्म समाप्येत तावत्त्वं आचार्यो भव ॥ आचार्योवदेत्—भवामि—ॐबृहस्पतेऽअतियदर्य्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रम् ॥ ३/२६ ॥ब्रह्मवरणम्—यजमानः पूगीफलं गृहीत्वावदेत्—अमुकप्रवरान्वित अमुकगोत्रः शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायी अमुकशर्मा यजमानोहं अमुकप्रवरान्वित अमुकगोत्रं शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायिनं अमुकशर्माणं ब्राह्मणं अस्मिन्ग्रहशान्त्याख्येकर्मणि ब्रह्मत्वेनत्वामहंवृणे इत्युक्त्वापूगीफलंदद्यात् ॥ पूगीफलंगृहीत्वावदेत्—ॐ वृतोस्मि ॥ ॐ व्रतेन० ॥ व्रताय एतत्ते पाद्यं पादावनेजनं पादप्रक्षालनं एषतेऽर्घः ॥ गन्धाक्षतपुष्पमालादिभिः संपूज्य हस्तेकङ्कणबन्धनम्—ॐयदाबध्नन्दाक्षायणा० ॥ यथाशक्तिसुवर्णहस्तमुद्रालङ्कारवस्त्रोपवस्त्रासनोपवीतादिवरणसामग्रींदत्वावदेत्—यथाचतुर्मुखोब्रह्मासर्वलोकपितामहः । तथात्वंममयज्ञेस्मिन्ब्रह्माभवद्विजोत्तम ॥ यावत्कर्मसमाप्येत तावत्त्वं ब्रह्माभव ॥ भवामि ॐब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः ॥ १३/३ ॥ गाणपत्यवरणम्—यजमानः पूगीफलं गृहीत्वावदेत्—अमुकप्रवरान्वित अमुकगोत्रः शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशा

स्वाध्यायीअमुकशर्मायजमानोहंअमुकप्रवरान्वितअमुकगोत्रंशुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायिनं अमुकशर्माणं ब्राह्मणं अस्मिन्ग्रहशान्त्याख्येकर्मणि गाणपत्यत्वेनत्वामहंवृणेइत्युक्त्वापूगीफलंदद्यात् ॥ पूगीफलं गृहीत्वा वदेत्—ॐ वृतोस्मि ॥ ॐ व्रतेनं० ॥ व्रतायएतत्तेपाद्यंपादावनेजनंपादप्रक्षालनंएषतेऽर्घः ॥ गन्धाक्षतपुष्पमालादिभिः संपूज्य हस्तेकङ्कणबन्धनम्—ॐयदाबध्नन्दाक्षायणा० ॥ यथाशक्तिसुवर्णहस्तमुद्रालङ्कारवस्त्रोपवस्त्रासनोपवीतादिवरणसामग्रींदत्वावदेत्—वांछितार्थफलावाप्त्यैपूजितोसिसुरासुरैः । निर्विघ्नं क्रतुसंसिध्यै त्वामहं गणपं वृणे ॥ ॐ गणानान्त्वा ० ॥ सदस्यवरणम्—यजमानः पूगीफलं गृहीत्वा वदेत्—अमुकप्रवरान्वितअमुकगोत्रः शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायी अमुकशर्मायजमानोहं अमुकप्रवरान्वितअमुकगोत्रंशुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायिनंअमुकशर्माणंब्राह्मणंअस्मिन्ग्रहशान्त्याख्येकर्मणिसादस्यत्वेनत्वामहंवृणे इत्युक्त्वा पूगीफलं दद्यात् ॥ ॐ वृतोस्मि ॥ ॐ व्रतेनं ०॥ व्रतायएतत्तेपाद्यंपादावनेजनंपादप्रक्षालनंएषतेऽर्घः गन्धाक्षतपुष्पमालादिभिः संपूज्य हस्ते कङ्कणबन्धनम्—ॐ यदाबध्नन्दाक्षायणा ० ॥ यथाशक्ति सुवर्णहस्तमुद्रालङ्कारवस्त्रोपवस्त्रासनोपवीतादिवरणसामग्रींदत्वावदेत्—कर्मणामुपदेष्टारंसर्वकर्मविदुत्तमम् । कर्मिणंवेदतत्त्वज्ञंसदस्यंत्वामहंवृणे॥ ॐसदसस्पतिमद्भुतम्प्रियमिन्द्रस्यकाम्यम् ॥ सनिम्मेधामयासिषᳪस्वाहा ॥ १३/३ ॥ ऋत्विग्वरणम्—यजमानः पूगीफलंगृहीत्वावदेत्— अमुकप्रवरान्वितअमुकगोत्रः शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायीअमुकशर्मायजमानोहं अमुकप्रवरान्वितअमुकगोत्रं शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायिनंअमुकशर्माणंब्राह्मणंअस्मिन्ग्रहशान्त्याख्येकर्मणिऋत्विक्त्वेनत्वामहंवृणेइत्युक्त्वापूगीफलंदद्यात् ॐ व्रतेनं० ॥ व्रताय एतत्ते पाद्यंपादावनेजनंपादप्रक्षालनं एषतेऽर्घः गन्धाक्षतपुष्पमालादिभिः संपूज्यहस्तेकङ्कणबन्धनम्—ॐ यदाबध्नन्दाक्षायणा ० ॥ यथाशक्तिसुवर्णहस्तमुद्रालङ्कारवस्त्रोपवस्त्रासनोपवीतादिवरणसामग्रीन्दत्वा वदेत्—यज्ञादिकर्मकार्येषुऋत्विक्शक्रमखेयथा । तथावैयज्ञकार्येस्मिन्ऋत्विक्त्वंमेमखेभव ॥ ॐ एतावद्रूपन्यज्ञस्ययद्देवैर्ब्रह्मणाकृतम् ॥

तदेतत्सर्वमाप्नोतियज्ञेसौत्रामणीसुते ॥ ३१/१९ ॥ एवंचतुरोष्टौवाऋत्विजोवृत्वाप्रार्थयेत्—ब्राह्मणाःसन्तुमेशस्ताः पापात्पान्तुसमाहिताः । देवानांचैवदातारः पातारःसर्वदेहिनाम् ॥ जपयज्ञैस्तथाहोमैर्दानैश्चविविधैःपुनः । देवानांचऋषीणांचतृप्त्यर्थयाजकाःकृताः ॥ येषांदेहे स्थितावेदाःपावयन्तिजगत्त्रयम् । रक्षन्तुसततंतेमांजपयज्ञेव्यवस्थिताः ॥ ब्राह्मणाजङ्गमंतीर्थं त्रिषुलोकेषु विश्रुतम् । येषां वाक्योदकेनैवशुद्ध्यन्तिमलिनाजनाः ॥ पावनाः सर्ववर्णानांब्राह्मणाब्रह्मरूपिणः । सर्वकर्मरतानित्यं वेदशास्त्रार्थकोविदाः ॥ श्रोत्रियाः सत्यवाचश्च ग्रहध्यानरताःसदा । यद्वाक्यामृतसंसिक्ताऋद्धिंयान्तिनरद्रुमाः ॥ अङ्गीकुर्वन्तुकर्मैतत्कल्पद्रुमसमाशिषः । यथोक्तनियमैर्युक्तामन्त्रार्थेस्थिरबुद्धयः ॥ यत्कृपालोचनात्सर्वाऋद्धयोवृद्धिमाप्नुयुः । अस्मिन्यागेमयापूज्याः सन्तुमेनियमान्विताः ॥ अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः । ग्रहध्यानरतानित्यंप्रसन्नमनसःसदा ॥ अदुष्टभाषणाः सन्तुमासन्तुपरनिन्दकाः । ममापिनियमाह्येते भवन्तु भवतामपि ॥ ऋत्विजश्च यथापूर्वंशक्रादीनांमखेऽभवन् । यूयंतथामेभवतऋत्विजोद्विजसत्तमाः ॥ अस्ययागस्यनिष्पत्तौभवन्तोऽभ्यर्थिता मया । सुप्रसन्नैः प्रकर्तव्यं शान्तिकं विधिपूर्वकम् ॥ आचारायजमानहस्ते कङ्कणबन्धनम्—ॐयदाबध्नन्दाक्षायणा० ॥ यजमानपत्न्याः वामहस्ते कङ्कणबन्धनम्—ॐतम्पत्नीभिरनुगच्छेमदेवाꣳपुत्रैर्भ्रातृभिरुतवाहिरण्यैꣳ ॥ नाकङ्गृभ्णानाꣳसुकृतस्यलोकेतृतीयेपृष्ठेऽअधिरोचनेदिव? ॥ १५/५० ॥ इतिऋत्विग्वरणम् ॥

## ॥ अथादिग्रक्षणम् ॥

आचार्यः हस्ते जलमादाय अस्मिन्ग्रहशान्त्याख्ये कर्मणि यजमानेन वृतोहमाचार्यकर्म करिष्ये इति सङ्कल्प्य स्ववामहस्ते गौरसर्षपान्गृहित्वादक्षिणहस्तेनाच्छाद्य—ॐ कृणुष्वपाजꣳप्प्रसितिन्नपृथ्वीम्याहिराजेवामवाँ२ऽइभेन ॥ तृष्वीमनुप्प्रसितिन्द्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैꣳ ॥ १३ ॥ तवभ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानꣳ ॥ तपूꣳष्यग्नेजुह्वापतङ्गानसन्दितोविसृजविष्वगुल्का?

॥ १०/१३ ॥ प्रतिस्पशो विसृज तूर्णितमो भवा पायुर्विशोऽअस्याऽअदब्धः ॥ योनो दूरेऽअघशꣳसो योऽअन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥ ११/१३ ॥ उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ२ऽओषतात्तिग्महेते ॥ योनोऽअरातिꣳ समिधान चक्रे नीचातन्धक्ष्यतसन्नशुष्कम् ॥ १२/१३ ॥ ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ॥ अवस्थिरातनुहि यातुजूनाञ्जामिमजामिम्प्रमृणीहि शत्रून् ॥ अग्नेष्ट्वा तेजसा सादयामि ॥ १३/१३ ॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् । सर्वेषामवरोधेन शान्तिकर्म समारभे ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन । ते सर्वेऽप्यपगच्छन्तु ग्रहशान्तिङ्करोम्यहम् ॥ इत्येतैर्मन्त्रैरीशानादि सर्वदिक्षु विकिरेत् ॥ उदकोपस्पर्शः ॥ इति दिग्रक्षणम् ॥

## ॥ अथ पञ्चगव्यकरणं भूमिप्रोक्षणञ्च ॥

कांस्यपात्रे गोमूत्रं क्षिपेत्तत्रमन्त्रः—ॐ भूर्भुवꣳस्वः तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ ३/६ ॥ मन्त्रान्ते गोमूत्रं क्षिप्त्वा ततः गोमयं क्षिपेत्तत्रमन्त्रः—ॐ मानस्तोके तनये मानऽआयुषि मानो गोषु मानोऽअश्वेषु रीरिषः ॥ मानो वीरान्रुद्र भामिनो वधीर्हविष्मन्तꣳ सदमित्त्वा हवामहे ॥ १६/१६ ॥ मन्त्रान्ते गोमयं क्षिप्त्वा ततः क्षीरं क्षिपेत्तत्रमन्त्रः—ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ॥ भवा वाजस्य सङ्गथे ॥ ११२/१२ ॥ मन्त्रान्ते दुग्धं क्षिप्त्वा ततः दधि क्षिपेत्तस्य मन्त्रः—ॐ दधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः ॥ सुरभि नो मुखा करत्प्रणऽआयूꣳषि तारिषत् ॥ ३२/२३ ॥ मन्त्रान्ते दधि क्षिप्त्वा ततः आज्यं क्षिपेत्तस्य मन्त्रः—ॐ तेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियन्देवानामनाधृष्टन्देवयजनमसि ॥ ३१/१ ॥ मन्त्रान्ते आज्यं क्षिप्त्वा ततः कुशोदकं क्षिपेत्तस्य मन्त्रः—ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ १०/१ ॥ मन्त्रान्ते कुशोदकं क्षिप्त्वा ॐ इति प्रणवेन यज्ञकाष्ठेनालोड्य कर्मभूमिं यज्ञसंभारांश्च प्रोक्षेत्तस्य मन्त्राः—ॐ आपो हि ष्ठा० यो वः शिवतमो० तस्मा अरङ्गमामवो० ततः कृताञ्जलिः—ॐ स्वस्ति नऽइन्द्रो०

इति मन्त्रं पठेत्[1] ॥ ॐ देवा आयान्तु यातुधाना अपयान्तु विष्णो देवयजनं रक्षस्व इति पठित्वा भूमौ प्रादेशं कुर्यात् ॥

## ॥ अथभूमिपूजनम्[2] ॥

होममानतो यथार्हं चतुरस्रं स्थंडिलं विरच्य तदग्रे अक्षतपुञ्जेषुपूगीफलेषुवाभूमिकूर्मानन्तानांपूजनम्-भूरसीत्यस्यप्रस्तारपङ्क्तिऋषिः अनुष्टुप्छन्दःभूमिर्देवताभूमिपूजनेविनियोगः—ॐभूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवींयच्छपृथिवीन्दृꣳहपृथिवीम्माहिꣳसीः ॥ १६/३ ॥ ॐभूम्यैनमः भूमिं आवाहयामि ॐभूम्यैनमः इत्यनेन मन्त्रेण षोडशोपचारैःसंपूज्यकूर्मपूजनम्—यस्यकूर्मेत्यस्यप्रजापतिऋषिः अनुष्टुप्छन्दःकूर्मोदेवताकूर्मपूजनेविनियोगः—ॐयस्यकुर्म्मोगृहेहुविस्तमग्नेवर्द्धयात्वम् ॥ तस्मैदेवाऽअधिब्रुवन्नयञ्चब्रह्मणस्पतिः ॥ ५२/३ ॥ ॐकूर्माय नमः कूर्मं आवाहयामि ॥ ॐकूर्माय नमः इत्यनेन मन्त्रेण षोडशोपचारैः संपूज्यअनन्तपूजनम्—स्योनापृथिवीत्यस्यमेधातिथिऋषिः अनन्तोदेवतागायत्रीछन्दः अनन्तपूजनेविनियोगः—ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥ १३/३६ ॥ ॐअनन्ताय नमः अनन्तं आवाहयामी ॥ ॐ अनन्तायनमः इत्यनेन मन्त्रेण षोडशोपचारैः संपूजयेत् ॥

## ॥ अथ अग्निप्रतिष्ठापनम् ॥

पूर्वोच्चारित शुभपुण्यतिथौ अस्मिन्ग्रहशान्त्याख्ये कर्मणि पञ्चभूसंस्कारपूर्वकं अग्निप्रतिष्ठापनं करिष्ये ॥ स्थण्डिलेपञ्चभूसंस्काराः—मूलधृतैस्त्रिभिर्दर्भैर्दक्षिणतउदक्संस्थं त्रिःपरिसमुह्य ॥

---

१ शान्तिसारे—समन्ततश्च सिद्धार्थान्क्षिपेद्रक्षोघ्नमन्त्रतः । सर्वतः पञ्चगव्येन प्रोक्षयेद्यागमण्डपम् ॥ आपोहिष्ठात्र्यृचेनैव ततः स्वस्त्ययनं जपेत् ॥ २ भूमिं संपूज्य विधिवत्तत्र संस्कारपञ्चकम् । स्थण्डिलेऽग्निं प्रतिष्ठाप्यकलशान्स्थापयेत्क्रमात् ॥ ३ कुशकंडिकाकारिकायाम्—कृमिकीटपतङ्गाद्या विचरन्ति महीतले । तेषां संरक्षणार्थाय परिसमूहनमुच्यते ॥ गृहितव्यास्त्रयो दर्भाः कनिष्ठाङ्गुष्ठमध्यतः । दक्षिणे चोत्तरे कुर्यात्त्रिस्त्रिरेखासमूहनम् ॥ अत्र पूर्वस्यामपसारणमिति केचित् ॥ तत्पक्षे पश्चिममारभ्य प्राक्संस्थं वा परिसमूहनम् ॥

गोमयोदकेनोपलिप्यं ॥ यज्ञकाष्ठेन स्रुवेण कुशैर्वा दक्षिणत उदक्संस्थं त्रिरुल्लिख्यं ॥ अनामिकाङ्गुष्ठाभ्यां यथोल्लिखिताभ्यो लेखाभ्यः पांसूनुद्धृत्य प्रतिरेखं न्युब्जमुष्टिना प्राजापत्यतीर्थेनोदकेनाभ्युक्ष्य ॥ कांस्यादिपात्रेणाग्निमानीय स्थण्डिलाग्नेय्यां निदध्यात् ॥ तस्मादाचार्यः ॐ हुंफट् इति मन्त्रेण क्रव्यादांशं नैर्ऋत्यां क्षिप्त्वा आत्माभिमुखमग्निं स्थापयेत्तत्रमन्त्रः—
ॐ अ॒ग्निन्दू॒तम्पु॒रोद॑धेहव्य॒वाह॒मुप॑ब्रुवे ॥ दे॒वाँ२आसा॑दयादि॒ह ॥ [२२/१७] ॥ अग्न्याहरणपात्रेसाक्षतोदकंनिषिच्यअग्निमुखंकृत्वाध्यायेत्—
ॐ च॒त्वारि॒शृङ्गा॒त्रयो॑ऽअस्य॒पादा॒द्वेशी॒र्षे॒स॒प्तहस्ता॑सोऽअस्य ॥ त्रिधा॑ब॒द्धोवृ॒षभोरो॑रवीतिम॒हादे॒वोमर्त्याँ॒२ऽआवि॑वेश ॥ [१७/९१] ॥ सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः । त्रिपात्प्रसन्नवदनः सुखासीनःशुचिस्मितः ॥ स्वाहांतुदक्षिणेपार्श्वे देवींवामेस्वधांतथा । बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नंस्रुचंस्रुवम् ॥ तोमरं व्यजनं वामे घृतपात्रं चधारयन् । आत्माभिमुखमासीन एवंरूपो हुताशनः ॥ अग्नेवैश्वानरशाण्डिल्यगोत्रशाण्डिल्यासितदेवलेतित्रिप्रवरभूमिमातः वरुणपितः मेषध्वज प्राङ्मुखममसम्मुखोभव ॥ शान्तिके वरदनामाग्नये नमः सर्वो

---

१ पुरा इन्द्रेण वज्रेण हतो वृत्रो महासुरः । व्यापिता मेदसा पृथ्वी तदर्थमुपलेपनम् ॥ आचारप्रदीपे—रुग्णा वृद्धा प्रसूता च वन्ध्या सन्धिन्यमेध्यभुक् । मृतवत्सा च नैतासां ग्राह्यं मूत्रं शकृत्पयः ॥ २ प्रतीचीमारभ्य प्रागन्तं वा उल्लेखनम् ॥ गृह्यपरिशिष्टे—रेखात्रयमुदक्संस्थं प्रागग्रं स्थण्डिलावधि । अथवैतत्प्रकुर्वीत द्वादशाङ्गुलमायतम् ॥ उल्लेखनं ततःकुर्यादस्थिकण्टकमेव च । तेषामुद्धारणार्थाय उल्लेखः कथितो बुधैः ॥ ये भ्रमन्ति पिशाचाद्या ह्यन्तरिक्षनिवासिनः । तेषां प्रहरणार्थाय समुध्रः कथितो बुधैः ॥ ३ स्मार्तोल्लासे—उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम् ॥ तिरश्चावोक्षणं प्रोक्तं नीचेनाभ्युक्षणं स्मृतम् ॥ उत्तानेन करेणापि सपवित्रेण वारिणा । विदुषाप्रोक्षणं कार्यं नीचेनावोक्षणंतथा ॥ प्राजापत्येन तीर्थेन कुर्यादभ्युक्षणं बुधः ॥ ४ सम्पुटेनाग्निमानीय स्थाप्याग्नेर्दिशिकुण्डतः । आमक्रव्यभुजौ तस्मात्त्यक्त्वा कुण्डे विनिक्षिपेत् ॥ शुभं पात्रं तु कांस्यस्य तेनाग्निंप्रणयेद्बुधः । शरावे भिन्नपात्रे वा कपाले चोल्मुकेन वा । नाग्नेः प्रणयनं कार्यं व्याधिशोकभयावहम् ॥ गदाधरः—कुलालचक्रघटितं मृन्मयं पात्रमासुरम् । न देवहस्तघटितं स्थाल्यादि दैवपैतृकम् ॥ कर्कोपाध्यायाः—परिसमूहनादयः पञ्चपदार्थां भूमिशुद्ध्यर्था इति केचित् ॥ तदयुक्तं नह्यशुद्धे देशेऽग्नेःस्थापनप्रवृत्तिर्युक्ता तस्माददृष्टार्था एव यत्र यत्राग्नेः स्थापनं तत्रतत्रैते कर्तव्या इति ॥ ५ चिराच्छिष्टपठितमिदं वह्नेर्भूमिमातृत्वं वरुणपितृत्वं च किंमूलकं न विद्मः तस्मात्तज्ज्ञैर्मूलंमृग्यम् ॥

पचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥ इति नैर्ऋत्यकोणे बहिरग्निं संपूज्य प्रार्थयेत्—अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । हिरण्यवर्णमनलं समृद्धं विश्वतोमुखम् ॥ इत्यग्निस्थापनम् ॥

## ॥ अथग्रहमण्डलदेवतास्थापनप्रतिष्ठापूजनप्रयोगः ॥

स्थण्डिलस्यरुद्रदिग्भागेग्रहवेद्युपरिपीठमध्येवर्तुलेद्वादशाङ्गुलेमण्डले प्राङ्मुखंसूर्यं रक्तपुष्पाक्षतैरावाहयेत्—ॐआकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ $\frac{४३}{३३}$ ॥ ॐ भूर्भुवः स्वः कलिङ्गदेशोद्भवकाश्यपसगोत्ररक्तवर्णभोसूर्यइहागच्छइहतिष्ठ ॐ सूर्याय नमः सूर्यं आवाहयामि ॥ आग्नेय्यांचतुरस्रेचतुर्विंशत्यङ्गुलेमण्डलेप्रत्यङ्मुखंसोमंशुक्लपुष्पाक्षतैः—ॐइमन्देवाऽअसपत्नꣳसुवद्ध्वम्महतेक्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजानराज्ज्यायेन्द्रस्येन्द्रियाय ॥ इमममुष्ष्यपुत्रममुष्ष्यैपुत्रमस्यैविशऽएषवोमी

१ अग्निप्रणयनं कृत्वा वेद्यामावाहयेत्सुरान् ॥ शूद्राणामपि मन्त्रवर्ज्यं ग्रहयज्ञकरणे अधिकारः—शूद्रधर्मप्रकरणे मनुः-धर्मेप्सवस्तु धर्मज्ञाःसतांधर्ममनुष्ठिताः । मन्त्रवर्ज्यं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥ केचन विप्राः द्रव्यलोभेन उपनयनरहितानां व्रात्यवैश्यक्षत्रियाणां द्रव्यमादाय ब्राह्मणद्वारा सत्तानिवृत्तिं कृत्वा वयं कुर्मः इतिवदन्तः वैदिकविधिना कुर्वन्ति तन्नयुक्तम् ॥ पराशरः—दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः । ब्राह्मणस्तुभवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत् ॥ यत्र विप्रः शूद्रस्य दक्षिणामादाय तदीयं हविः शान्तिपुष्ट्याद्यर्थं वैदिकैर्मन्त्रैर्जुहोति तत्र ब्राह्मणस्यैव दोषः शूद्रस्तु होमफलं लभते ॥ तस्सिद्धो ग्रहमखमूलाद्युत्पत्तिवास्तुशान्त्यादौ मन्त्रवर्ज्यं करणे शूद्रस्याधिकारः ॥ मोक्षधर्मे शूद्रं प्रकृत्य—मन्त्रवर्जं न दुष्यन्तिकुर्वाणाः पौष्टिकीं क्रियाम् ॥ २ मात्स्ये—गर्तस्योत्तरपूर्वेण वितस्तिद्वयविस्तृताम् । वप्रद्वयवृतां वेदीं वितस्त्युच्छ्रायसंयुताम् ॥ संस्थापनाय देवानां चतुरस्रामुदक्प्लवाम् ॥ स्कान्दे—तस्माच्चोत्तरपूर्वेण स्थण्डिलं हस्तमात्रकम् । त्रिवप्रं चतुरस्रं च वितस्त्युच्छ्रायसम्मितम् ॥ अत्र त्रिवप्राण्युक्तानि ॥ ३ जन्मभूर्गोत्रमग्निश्च वर्णस्थानमुखानि च । योज्ञात्वा कुरुते शान्तिं ग्रहास्तेनावमानिताः ॥ ग्रहदेशाः—उत्पन्नोर्कः कलिङ्गेषु यमुनायां च चन्द्रमाः । अङ्गारकस्त्ववन्त्यां च मगधायां हिमांशुजः ॥ सैंधवेषु गुरुर्जातः शुक्रो भोजकटे तथा । शनैश्चरस्तु सौराष्ट्रे राहुर्वै राठिनापुरे ॥ अन्तर्वेद्यां तथा केतुरित्येता ग्रहभूमयः ॥

राजासोमोस्माकंब्राह्मणानांराजा॥ $\frac{९}{४०}$॥ ॐभूर्भुवःस्वःयमुनातीरोद्भवआत्रेयसगोत्रशुक्लवर्णभोसोमइहागच्छइहतिष्ठ ॐसोमायनमः सोमंआवाहयामि ॥ दक्षिणस्यांदिशित्रिकोणेत्र्यङ्गुलेमण्डलेदक्षिणाभिमुखंभौमंरक्तपुष्पाक्षतैः—ॐअग्निर्मूर्द्धादिवःककुत्पतिः पृथिव्याऽअयम् ॥ अपाꣳरेताꣳसिजिन्वति ॥ $\frac{१२}{३}$ ॥ ॐ भूर्भुवः स्वः अवन्तिदेशोद्भवभारद्वाजसगोत्ररक्तवर्णभोभौमइहागच्छइहतिष्ठ ॐभौमायनमः भौमं आवाहयामि ॥ ऐशान्यांदिशिबाणाकारेचतुरङ्गुलेमण्डलेउदङ्मुखंबुधंपीतपुष्पाक्षतैः —उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्तेसꣳसृजेथामयञ्च ॥ अस्मिन्त्सधस्थेऽअद्ध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ $\frac{१४}{१५}$॥ ॐभूर्भुवःस्वः मगधदेशोद्भव आत्रेयसगोत्रपीतवर्णभोबुध इहागच्छ इहतिष्ठ ॐबुधायनमः बुधं आवाहयामि॥ उत्तरस्यां दिशि लम्बदीर्घचतुरस्रेपट्टाकारेषडङ्गुलेमण्डलेबृहस्पतिंपीतपुष्पाक्षतैरावाहयेत्—ॐबृहस्पतेऽअतियदर्य्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रम् ॥ $\frac{३}{२६}$॥ ॐभूर्भुवःस्वः सिंधुदेशोद्भव आङ्गिरसगोत्रपीतवर्ण भो बृहस्पते इहागच्छ इहतिष्ठ ॐबृहस्पतये नमः बृहस्पतिं आवाहयामि ॥ पूर्वस्यांदिशिपञ्चकोणेनवाङ्गुलेमण्डले प्राङ्मुखं शुक्रं शुक्लपुष्पाक्षतैः—ॐअन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्षत्रम्पयःसोमम्प्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ $\frac{७५}{१९}$ ॥ ॐभूर्भुवःस्वः भोजकटदेशोद्भव भार्गवसगोत्रशुक्लवर्णभोशुक्रइहागच्छइहतिष्ठ ॐशुक्राय नमः शुक्रं आवाहयामि॥ पश्चिमायां दिशि धनुराकारे द्व्यङ्गुलेमण्डलेप्रत्यङ्मुखंशनिंकृष्णपुष्पा

---

१ ग्रहाणां गोत्राणि—आदित्यः काश्यपो गोत्र आत्रेयश्चन्द्रमा भवेत् । भारद्वाजो भवेद्भौमस्तथात्रेयश्च सोमजः ॥ शक्रपूज्योङ्गिरोगोत्रः शुक्रो वै भार्गवस्तथा । शनिः काश्यप एवाथ राहुः पैठीनसिस्तथा ॥ केतवो जैमिनीयाश्च गोत्राण्याहुर्मनीषिणः ॥

क्षतैरावाहयेत् ॐशन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ $\frac{१२}{३६}$ ॥ ॐभूर्भुवःस्वःसौराष्ट्रदेशोद्भवकाश्यपसगोत्रकृ-
ष्णवर्णभोशनैश्चरइहागच्छइहतिष्ठॐशनैश्चरायनमःशनैश्चरंआवाहयामि ॥ नैर्ऋत्यांदिशिशूर्पाकारेद्वादशाङ्गुलेमण्डलेदक्षिणाभिमुखंराहुंकृ-
ष्णपुष्पाक्षतैः—ॐकयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ $\frac{४}{३६}$ ॥ ॐ भूर्भुवःस्वःराठिनापुरोद्भवपैठिनस-
गोत्रनीलवर्णभोराहोइहागच्छइहतिष्ठॐराहवेनमःराहुंआवाहयामि ॥ वायव्यांदिशिध्वजाकारेषडङ्गुलेमण्डलेदक्षिणाभिमुखंकेतुंधूम्रपु-
ष्पाक्षतैः—ॐकेतुङ्कृण्वन्नकेतवेपशोमर्य्याऽअपेशसे ॥ समुषद्भिरजायथाः ॥ $\frac{३७}{२९}$ ॥ ॐभूर्भुवःस्वःअन्तर्वेदिसमुद्भवजैमिनिसगोत्रधूम्रवर्ण-
भोकेतोइहागच्छइहतिष्ठॐकेतवेनमःकेतुंआवाहयामि ॥

## ॥ अथ अधिदेवतास्थापनम् ॥

ॐत्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ $\frac{६०}{३}$ ॥ ॐभूर्भुवःस्वःईश्वरइहागच्छइहति
ष्ठसूर्यदक्षिणपार्श्वेॐईश्वरायनमःईश्वरंआवाहयामि ॥ ॐश्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्नि
षाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ॥ $\frac{२२}{३१}$ ॥ ॐभूर्भुवःस्वःउमेइहागच्छइहतिष्ठसोमदक्षिणपार्श्वेॐउमायैनमःउमांआवाहयामि ॥ ॐ
यदक्रन्दःप्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअर्वन् ॥ $\frac{१२}{२९}$ ॥ ॐभूर्भुवः
स्वःस्कन्दइहागच्छइहतिष्ठभौमदक्षिणपार्श्वेॐस्कन्दायनमःस्कन्दंआवाहयामि ॥ ॐविष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिवि

---

१ सकारेण तु वक्तव्यं गोत्रं सर्वत्रधीमता । सकारः कुतुपोज्ञेयःतस्माद्यत्नेन तं वदेत् ॥ २ मध्ये तु भास्करं विंद्याच्छशिनं पूर्वदक्षिणे । दक्षिणे लोहितं विंद्याद् बुधं पूर्वोत्तरेण तु ॥ उत्तरे तु गुरुं विंद्यात्पूर्वेणैव तु भार्गवम् । पश्चिमे तु शनिं विंद्याद्राहुंदक्षिणपश्चिमे ॥ पश्चिमोत्तरतः केतुं स्थाप्या वै शुक्लतण्डुलैः ॥ ३ ग्रहवर्णाः—रविभौमौ रक्तवर्णौ श्वेतश्चन्द्रस्तु भार्गवः । बुधजीवौ पीतवर्णौ कृष्णौ मन्दविधुन्तुदौ ॥ धूमवर्णाः केतवश्च ग्रहवर्णाः प्रकीर्तिताः ॥

ष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ ५१ ॥ ॐभूर्भुवःस्वःविष्णोइहागच्छइहतिष्ठबुधदक्षिणपार्श्वे ॐविष्णवेनमःविष्णुंआवाहयामि ॥ ॐआब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यःशूरऽइषव्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुःसप्तिःपुरन्धिर्योषाजिष्णूरथेष्ठाःसभेयोयुवास्ययजमानस्यवीरोजायतान्निकामेनिकामेनःपर्ज्जन्योवर्षतुफलवत्योनऽओषधयःपच्यन्तांयोगक्षेमोनः कल्पताम् ॥ २२ ॥ ॐभूर्भुवःस्वःब्रह्मनइहागच्छइहतिष्ठगुरुदक्षिणपार्श्वेॐब्रह्मणे नमः ब्रह्माणं आवाहयामि ॥ ॐसजोषाऽइन्द्रसगणोमरुद्भिःसोमम्पिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूँरपमृधोनुदस्वाथाभयङ्कृणुहिविश्वतोनः ॥ ७ ॥ ॐभूर्भुवःस्वःइन्द्रइहागच्छइहतिष्ठशुक्रदक्षिणपार्श्वेॐइन्द्रायनमःइन्द्रंआवाहयामि ॥ ॐयमायत्वाङ्गिरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्म्मायस्वाहाघर्म्मःपित्रे ॥ ३८ ॥ ॐभूर्भुवःस्वःयमइहागच्छइहतिष्ठशनिदक्षिणपार्श्वेॐयमायनमःयमंआवाहयामि ॥ ॐकार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि ॥ समापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥ २८/६ ॥ ॐभूर्भुवःस्वःकालइहागच्छइहतिष्ठराहुदक्षिणपार्श्वेॐकालायनमःकालंआवाहयामि ॥ ॐचित्रावसोस्वस्तितेपारमशीय ॥ १८/३ ॥ ॐभूर्भुवःस्वःचित्रगुप्तइहागच्छइहतिष्ठकेतुदक्षिणपार्श्वे ॐचित्रगुप्ताय नमः चित्रगुप्तं आवाहयामि ॥

## अथप्रत्यधिदेवतास्थापनम् ।

ॐअग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँआसादयादिह ॥ २२ ॥ ॐभूर्भुवःस्वःअग्नेइहागच्छइहतिष्ठसूर्यवामपार्श्वेॐअग्नयेनमः अग्निंआवाहयामि ॥ ॐआपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायचक्षसे ॥ ३६ ॥ ॐभूर्भुवःस्वःआपइहागच्छतइहतिष्ठतसोमवामपार्श्वेॐअद्भ्योनमःअपःआवाहयामि ॥ ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥ १३/३६ ॥ ॐभूर्भुवःस्वःपृथिविइहागच्छइहतिष्ठभौमवामपार्श्वेॐपृथिव्यैनमःपृथिवींआवाहयामि ॥ ॐ इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाःसुरे स्वाहा ॥ १५ ॥ ॐभूर्भुवःस्वःविष्णोइहागच्छइहतिष्ठबुधवामपार्श्वेॐविष्णवेनमःविष्णुंआवाहयामि ॥ ॐत्रातारमिन्द्रमवितारमिन्द्रंहवे

हवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ ५०/२० ॥ ॐभूर्भुवःस्वःइन्द्रइहागच्छइहतिष्ठगुरुवामपार्श्वे ॐइन्द्रायनमःइन्द्रमावाहयामि ॥ ॐअदित्यैरास्नासीन्द्राण्याऽउष्णीषः ॥ पूषासिघर्म्मायदीष्व ॥ ३/३८ ॥ ॐभूर्भुवःस्वःइन्द्राणिइहागच्छइहतिष्ठशुक्रवामपार्श्वेॐइन्द्राण्यैनमःइन्द्राणींआवाहयामि ॥ ॐप्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयꣳस्यामपतयोरयीणाम् ॥ ६५/२३ ॥ ॐभूर्भुवःस्वःप्रजापतेइहागच्छइहतिष्ठशनिवामपार्श्वेॐप्रजापतयेनमःप्रजापतिंआवाहयामि ॥ ॐनमोस्तुसर्प्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यःसर्प्पेभ्योनमः ॥ १३/६ ॥ ॐभूर्भुवःस्वःसर्पाइहागच्छतइहतिष्ठताराहुवामपार्श्वेॐसर्पेभ्योनमःसर्पान्आवाहयामि ॥ ॐब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ३/१३ ॥ ॐभूर्भुवःस्वःब्रह्मन्इहागच्छइहतिष्ठकेतुवामपार्श्वेब्रह्मणेनमःब्रह्माणंआवाहयामि ॥

## ॥ अथविनायकादिपञ्चलोकपालदेवतास्थापनम् ॥

ॐगणानान्त्वागणपतिꣳहवामहेप्प्रियाणान्त्वाप्प्रियपतिꣳहवामहेनिधीनान्त्वानिधिपतिꣳहवामहेवसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधम् ॥ १९/२३ ॥ ॐभूर्भुवःस्वःगणपतेइहागच्छइहतिष्ठराहोरुत्तरतःॐगणपतयेनमःगणपतिंआवाहयामि ॥ ॐअम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनीम् ॥ १८/२३ ॥ ॐभूर्भुवःस्वःदुर्गेइहागच्छइहतिष्ठशनेरुत्तरतॐदुर्गायैनमःदुर्गांआवाहयामि ॥ ॐआनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानः ॥ २८/२७ ॥ ॐभूर्भुवःस्वःवायोइहागच्छइहतिष्ठरवेरुत्तरतःॐवायवेनमःवायुंआवाहयामि ॥ ॐघृतङ्घृतपावानःपिबतवसांवसापावानःपिबतान्तरिक्षस्यहविरसिस्वाहा ॥ दिशःप्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यःस्वाहा ॥ १९/६ ॥ ॐभूर्भुवःस्वःआकाशइहागच्छइहतिष्ठराहोर्दक्षिणेॐआकाशायनमःआकाशंआवाहयामि ॥ ॐयावाङ्कशामधुमत्यश्विनासूनृतावती ॥ तयायज्ञम्मिमिक्षतम् ॥ ११/७ ॥ ॐभूर्भुवःस्वःअश्विनौइहागच्छतम्इहतिष्ठतम्केतुदक्षिणेॐअश्विभ्यांनमःअश्विनौआवाहयामि ॥

## अथक्षेत्राधिपतेः वास्तोष्पतेश्चस्थापनम्

नहिस्पशमित्यस्य विश्वामित्रऋ० त्रिष्टुप्० क्षेत्राधिपतिर्देवता क्षेत्राधिपत्यावाहने वि०॥ॐनहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्ने? ॥ एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरङ्क्षैत्रजित्यायदेवा? ॥ ६०/३३ ॥ ॐभू० क्षेत्राधिपते इहा०इह०॥ उत्तरेक्षेत्राधिपतये नमः क्षेत्राधिपतिं आवा०स्था०॥ वास्तोष्पते इति मन्त्रस्य वसिष्ठऋ०वास्तोष्पतिर्देवता वास्तोष्पत्यावाहने वि०॥ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोऽअनमीवोभवानः । यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतुष्पदे॥ ॐभू०वास्तोष्पते इहा०इह० ॥ उत्तरे–वास्तोष्पतये०वास्तोष्पतिंआवा०स्था० ॥

## अथइन्द्रादिदशदिक्पालस्थापनम् ।

त्रातारमित्यस्य गर्गऋ० त्रिष्टुप्० इन्द्रोदेवता इन्द्रावाहनेवि० ॥ ॐत्रातारमिन्द्रमवितारमिन्द्रᳬहवेहवेसुहवᳬशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रᳬस्वस्तिनोमघवाधात्विन्द्रः ॥ ५०/२० ॥ ॐभू० इन्द्र इहा० इह० पूर्वे–इन्द्राय० इन्द्रं आवा० स्था० ॥ त्वन्नोऽअग्नेइत्यस्यहिरण्यस्तूपऋ० त्रिष्टुप्० अग्निर्देवता अग्न्यावाहने०॥ॐत्वन्नोऽअग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवन्द्य॥ त्रातातोकस्यतनयेगवामस्यनिमेषᳬरक्षमाणस्तवव्व्रते ॥ १३/३४ ॥ ॐभू० अग्ने इहा० इह० आग्नेय्यां–अग्नये० अग्निं आवा० स्था० ॥ यमायेत्यस्यदध्यङ्ङाथर्वणऋ० यजुश्छन्दः यमोदेवता यमावाहने विनियोगः॥ ॐयमायत्वाङ्गिरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्मायस्वाहाघर्म्म?पित्रे ॥ १/३८ ॥ ॐभूर्भुवःस्वः यमइहागच्छ इह० दक्षिणस्यां यमाय० यमं आवा० स्था०॥ ॐअसुन्वन्तमित्यस्यप्रजापतिऋषिः त्रि० निर्ऋतिर्देवता निर्ऋत्यावाहनेवि०॥ ॐअसुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ६२/१२ ॥ ॐभू० निर्ऋते इहा० इह० नैर्ऋत्यां नैर्ऋतये० निर्ऋतिंआवा०स्था० ॥ तत्त्वायामीत्यस्यशुनःशेपऋ०त्रिष्टुप्०वरुणोदेवतावरुणावाहने० ॥ ॐतत्त्वायामिब्रह्मणावन्दमान-

स्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः ॥ ४१/१८ ॥ ॐभू०वरुण इहा० इह० ॥ पश्चिमस्यां—
वरुणाय० वरुणं आवा० स्था० ॥ आनोनियुद्भिरित्यस्यवसिष्ठऋषिः त्रिष्टुप्छन्दः वायुर्देवतावाय्वावाहने० ॥ ॐआनोनियुद्भिःशतिनी-
भिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानः ॥ २८/२७ ॥ ॐभू० वायो इहागच्छ इह०
वायव्यां वायवेनमः वायुंआवा०स्था० ॥ वयंसोमेत्यस्य बन्धुऋ० गायत्री० सोमोदेवता सोमावाहने० ॥ ॐवयꣳसोमव्रतेतवमनस्तनू
षुबिभ्रतः ॥ प्रजावन्तःसचेमहि ॥ ५६/३ ॥ ॐभू० सोम इहा० इह० उत्तरस्यां—सोमाय० सोमं आवा० स्था० ॥ तमीशानमित्यस्य
गौतमऋ० जगती० ईशानो देवता इशानावाहने० ॥ ॐतमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामस-
द्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ १८/२५ ॥ ॐभू०ईशानइहागच्छ इहतिष्ठ ईशान्यां—ईश्वराय०ईश्वरं आवा० स्था० ॥ अस्मेरुद्राइति प्रगाथऋषिः
त्रिष्टुप्० ब्रह्मादेवता ब्रह्मावाहने० ॥ ॐअस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यः शꣳसतेस्तुवतेधायिपज्रऽइन्द्रज्ज्ये-
ष्ठाऽअस्माँ २ अवन्तुदेवाः ॥ ५०/३३ ॥ ॐभू०ब्रह्मन्इहा०इह० ॥ ऊर्ध्वायां ब्रह्मणेनमः ब्रह्माणंआवा०स्था० ॥ स्योनापृथिवीति मेधाति-
थिऋ० गायत्रीछन्दः अनन्तोदेवता अनन्तावाहने० ॥ ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥ १३/३६ ॥ ॐभू०
अनन्तइहागच्छ इह० ॥ अधरायां दिशि—अनन्ताय०अनन्तंआवा०स्थापयामि ॥ ॐमनोजूति० ॥ एषवै० ॥ सूर्याद्यावाहितग्रहम-
ण्डलदेवताः सुप्रतिष्ठिता वरदा भवन्तु ॥ ॐग्रहाऽऊर्ज्जाहुतयोव्यन्तोविप्रायमतिम् ॥ तेषांविशिप्रियाणांवोऽहमिषमूर्जꣳसमग्रभमुपयाम-
गृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ सम्पृचौस्थःसंमाभद्रेणपृङ्क्तंविपृचौस्थोविमापाप्मनापृङ्क्तम् ॥ ४/१ ॥ ॐभू०
सूर्यादिग्रहमण्डलदेवताभ्योनमः इतिषोडशोपचारैः सम्पूज्य विशेषार्घः—आदित्याद्याग्रहाःसर्वे पीठेचात्र प्रतिष्ठिताः । ते गृह्णन्तुमया दत्त-
मिममर्घं नमोऽस्तुवः ॥ प्रार्थना—आयुर्विद्या धनं सौख्यं यशः शौर्यं च पुष्कलम् ॥ पुत्रान् दत्त धनं दत्त सर्वान्कामांश्च दत्त मे ॥ हस्ते

ग्र०

॥ २९ ॥

जलमादाय अनयापूजया सूर्याद्यावाहितग्रहमण्डलदेवताः प्रीयन्ताम् ॥ ततः वेदीशानदिग्भागे गोमयोपलिप्ते सितैस्तन्दुलैः चतुर्विंशतिदलं अष्टदलंवाकमलं सकर्णिकं विलिख्य तस्यांकर्णिकायां अव्रणं कलशं कलशस्थापनविधिनास्थापयेत् । तद्यथा–तत्रभूमिं स्पृष्ट्वा–ॐमहीद्यौ?- पृथिवी० ॥ तत्रयवप्रक्षेपः–ओषधय८स० ॥ तदुपरिकलशस्थापनम्–आजिघ्रकुलशं० ॥ कलशेजलपूरणम्–ॐवरुणस्योत्तम्भं० ॥ गन्धप्रक्षेपः–ॐत्वाङ्गन्धर्वा० ॥ धान्यप्रक्षेपः–ॐधान्यमसिधि० ॥ सर्वौषधिप्रक्षेपः–ॐयाऽओषधी८पू० ॥ दूर्वाप्रक्षेपः–ॐकाण्डात्काडात्म० ॥ पञ्चपल्लवप्रक्षेपः–ॐअश्वत्थेवोनि० ॥ सप्तमृत्प्रक्षेपः–ॐस्योनापृथिवि० ॥ फलप्रक्षेपः–ॐया८फलिनी० ॥ पञ्चरत्नप्रक्षेपः–ॐपरिवाजपति८क० ॥ हिरण्यप्रक्षेपः–ॐहिरण्यगर्भ?सम० ॥ रक्तसूत्रेणवस्त्रेणचवेष्टयेत्–ॐयुवासुवासाः परि० ॥ पूर्णपात्रमुपरिन्यसेत्–ॐपूर्णादर्विंपरापत० ॥ वरुणमावाहयेत्–ॐतत्त्वायामीत्यस्यशुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणोदेवतावरुणावाहनेविनियोगः ॐतत्त्वायामि० ॥ ॐभूर्भुवः स्वः अस्मिन् कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकं आवाहयामि स्थापयामि॥ प्रतिष्ठापनम्–ॐमनोजूति० ॥ ॐवरुणाय नमः सुप्रतिष्ठितोवरदोभव ॥ इतिप्रतिष्ठाप्य ॥ ततः ॐभूर्भु० वरुणाय० चन्दनं समर्पयामि इत्यादिपञ्चोपचारैः सम्पूज्य तत्त्वायामीति-पुष्पाञ्जलिं समर्प्य अनेनपूजनेन वरुणः प्रीयताम् ॥ ततः अनामिकया कलशं स्पृष्ट्वा अभिमन्त्रयेत्–कलशस्यमुखे० कुक्षौतु० ॥ अंगैश्च०॥ आयान्तु० ॥ ततः गायत्र्यादिभ्योनमः इत्यनेन पञ्चोपचारैरभ्यर्च्य कलशं प्रार्थयेत्–देवदानव० ॥ त्वत्तोये० ॥ शिवःस्वयं० ॥ त्वयि तिष्ठन्तिभूतानि यतः कामफलप्रदाः । त्वत्प्रसादादिमंकर्म कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ इति प्रार्थयित्वा कलशं स्पृष्ट्वा साङ्गरुद्रजपः कार्यः ॥ इतिग्रहस्थापनप्रयोगः ॥

---

१ अत्र केचन अर्वाचीनाः ग्रन्थकाराः कलशेऽम्भसि असंख्यातेति मन्त्रेण रुद्रमावाह्य पूजयन्ति । केचन कलशोपरि पूर्णपात्रे रौप्यमयीं रुद्रमूर्तिं संस्थाप्य पूजयन्ति । परं च रुद्रकल्पद्रुमप्रयोगाब्धिदेवभट्टकृतप्रतिष्ठाप्रयोगशान्तिरत्नाकरकाशीदीक्षितकृतमहारुद्रप्रयोगखंडदीक्षितकृतमहारुद्रप्रयोगस्मार्तगङ्गाधर्यादिप्राचीनग्रन्थेषु वरुणमावाह्य साङ्गरुद्रजपः कार्यः

## ॥ अथ अग्न्युत्तारणम् ॥

यदि ग्रहाणां मूर्तयः चेत् तासां अग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठां कुर्यात् तद्यथा—हस्तेजलमादाय देशकालौ स्मृत्वा आसां अमुकामुक मूर्तीनां अग्नितपनताडनापघातादिदोषपरिहारार्थं अग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठां करिष्ये ॥ मूर्तीर्घृतेनाभ्यज्य पात्रे निधाय तदुपरि दुग्धमिश्रितजलधारां पातयेत् तत्र मन्त्राः—ॐसमुद्रस्यत्वावकयाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्यꣳशिवोभव ॥ ४/१७ ॥ हिमस्यत्वाजरायुणाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्यꣳशिवोभव ॥ ५/१७ ॥ उपज्मन्नुपवेतसेवतरनदीष्वा ॥ अग्नेपित्तमपामसिमण्डूकिताभिरागहिसेमन्नोयज्ञम्पावकवर्णꣳशिवङ्कृधि ॥ ६/१७ ॥ अपामिदंन्ययनꣳसमुद्रस्यनिवेशनम् ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यꣳशिवोभव ॥ ७/१७ ॥ अग्नेपावकरोचिषामन्द्रयादेवजिह्वया ॥ आदेवान्वक्षियक्षिच ॥ ८/१७ ॥ सनः पावकदीदिवोग्नेदेवाँ२इहावह ॥ उपयज्ञꣳहविश्चनः ॥ ९/१७ ॥ पावकयायश्चितयन्त्याकृपाक्षामन्रुरुचऽउषसोनभानुना ॥ तूर्वन्नयामन्नेतशस्यनूरणऽआयोघृणेनततृषाणोऽअजरः ॥ १०/१७ ॥ नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यꣳशिवोभव ॥ ११/१७ ॥ नृषदेवेडप्सुषदेवेड्बर्हिषदेवेड्वनसदेवेट्स्वर्विदेवेट् ॥ १२/१७ ॥ येदेवादेवानांयज्ञियायज्ञियानाꣳसंवत्सरीणमुपभागमासते ॥ अहुतादोहविषोयज्ञेऽअस्मिन्स्वयंपिबन्तुमधुनोघृतस्य

---

इत्युक्तत्वात् अस्माभिः प्रयोगे तथैवादृतमस्ति । केचन असंख्यातेतिमन्त्रेण होममपि कुर्वन्ति न तत्र मूलवचनं पश्यामः । केचन मरुदेशीयग्रन्थकारास्तु—असंख्यातेति सम्पूज्यो रुद्रो रुद्रघटाम्भसि । प्रजापतेरग्रभागे शनिमण्डलके शुभे । पूज्यो विष्णुः स्वसूक्तेन षोडशर्चेन तत्र वै ॥ रुद्रकुम्भाग्रतः पूज्या चामुण्डा जातवेदसे । योवः शिवेति गौर्यादिमातरश्चैव पूजयेत् ॥ सूर्याच्चपूर्वदिग्भागेअग्निमीळेऋचाततः । इषेत्वेतियजुर्वेदं सूर्याद्दक्षिणतोन्यसेत् ॥ सूर्याच्चपश्चिमेसामअग्नआयाहिमन्त्रतः । रवेरुत्तरदिग्भागेशन्नोदेवीत्यथर्वणम् ॥ इत्यादिप्रमाणपुरःसरं रुद्र विष्णुंचामुण्डांगौर्यादिमातरः ऋगादिवेदांश्च ग्रहमण्डले स्थापयन्ति तद्विषये प्राचीनग्रन्थेषु मूलं न पश्यामः ॥ वसिष्ठमतं स्वीकृत्य संस्कारभास्करकारेणापि तस्मिन्कलशे असंख्यातेति मंत्रेण रुद्रस्थापनमुक्तं परं च मत्स्यपुराणादिग्रन्थेषु मूलं न पश्यामः ॥ गौडानामयमाचारो दरीदृश्यते ॥

॥ $\frac{१३}{१७}$ ॥ येदेवादेवेष्वधिदेवत्वमायन्येब्रह्मणः पुरऽएतारोऽअस्य ॥ येभ्योनऽऋतेपवतेधामकिञ्चननतेदिवोनपृथिव्याऽअधिस्नुषु ॥ $\frac{१४}{१७}$ ॥ प्राणदाऽअपानदाव्यानदावर्चोदावरिवोदाः ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यꣳशिवोभव ॥ $\frac{१५}{१७}$ ॥

## ॥ अथ प्राणप्रतिष्ठाप्रयोगः ॥

अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्राऋषयः ऋग्यजुःसामानिछन्दांसि । पराप्राणशक्तिर्देवता । आंबीजं ह्रींशक्तिः । क्रोंकीलकं । आसां मूर्तीनां प्राणप्रतिष्ठायां विनियोगः ॐ आं ह्रीं क्रों यंरंलंवंशंषंसंहों ॐक्षंसंहंसः ह्रीं ॐ आंह्रीं क्रों आसां मूर्तीनां प्राणा इहप्राणाः ॥ ॐ आं ह्रीं क्रों यं रंलंवंशंषंसंहोंॐक्षंसंहंसःह्रींॐआंह्रींक्रोंआसांमूर्तीनांजीवइहस्थितः ॥ ॐआंह्रींक्रोंयं रंलंवंशंषं सं हों ॐ क्षंसंहंसः ह्रीं ॐ आंह्रीं क्रों आसां मूर्तीनां सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणपादप्राणाइहैवागत्यसुखंचिरंतिष्ठन्तु स्वाहा ॥ प्रणवस्य पञ्चदशावृत्तीः कृत्वा ॥ प्रतिष्ठापनम्—ॐमनोजूति० ॥ ब्राह्मणम्—ॐमनोजूतिर्जुषतामाज्यस्येतिमनसावाऽइदꣳसर्वमाप्तन्तन्मनसैवैतत्सर्वमाप्नोतिबृहस्पतिर्यज्ञमिमंतनोत्वरिष्टंयज्ञꣳसमिमंदधात्वितियद्विवृढंतत्संदधातिविश्वेदेवासऽइहमादयंतामितिसर्वेवैविश्वेदेवाःसर्वेणैवैतत्संदधातिसयदिकामयेद्ब्रूयात्प्रतिष्ठेति ॥ एषवैप्रति० ॥ आवाहितदेवताः सुप्रतिष्ठिता वरदा भवन्तु ॥ नेत्रोन्मीलनम्—ॐवृत्रस्यासिकनीनकश्चक्षुर्दाऽअसिचक्षुर्म्मेदेहि ॥ $\frac{३}{४}$ ॥ गन्धादिपञ्चोपचारान् दत्वा षोडशसंस्कारसिद्ध्ये षोडशप्रणवावृत्तीः कृत्वा आसां मूर्तीनां षोडशसंस्काराः सम्पद्यन्ताम् ॥ इतिप्राणप्रतिष्ठा ॥

## ॥ अथ अन्वाधानम् ॥

आचार्यः अग्नेः पश्चिमत उपविश्य आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य करिष्यमाणग्रहशान्त्याख्ये कर्मणि वैकल्पिकपदार्थाव-

धारणंदेवताभिध्यानंच करिष्ये ॥ अथवैकल्पिकपदार्थावधारणम्—पूर्वेण ब्रह्मणोगमनमपरेणवा ॥ अग्नेः पश्चिमतः पात्रासादनमुत्तरतोवा॥ त्रीणि पवित्राणि ॥ पवित्रे द्वे ॥ प्रोक्षणीपात्रम् ॥ आज्यस्थाली चरुस्थाली च तैजसी मृन्मयी वा ॥ पालाश्यः समिधो यज्ञियवृक्षोद्भवा अन्या वा ॥ प्राश्वावाघारौ विदिशौ वा ॥ समिद्धतमेऽग्नौ आज्यभागौ आग्नेयमुत्तरपूर्वार्द्धे सौम्यं दक्षिणपूर्वार्द्धे ॥ पूर्णपात्रं दक्षिणावरो वा एतान्वैकल्पिकपदार्थानहमस्मिन्कर्मणि करिष्ये ॥ अथ देवताभिध्यानम्—समिद्द्वयं गृहीत्वा—प्रजापतिं इन्द्रं अग्निं सोमं एकैकयाज्याहुत्या ॥ आदित्यं सोमं भौमं बुधं बृहस्पतिं शुक्रं शनैश्चरं राहुं केतुं इति नवग्रहान् अर्कादियथालाभसमिच्चरुतिलाज्यद्रव्यैः प्रत्येकं प्रतिद्रव्येण अष्टाष्टसंख्याकाभिराहुतिभिः ॥ ईश्वरं उमां स्कन्दं विष्णुं ब्रह्माणं इन्द्रं यमं कालं चित्रगुप्तं इत्यधिदेवताः अग्निं अपः धरां विष्णुं इन्द्रं इन्द्राणीं प्रजापतिं सर्पान् ब्रह्माणं एताः प्रत्यधिदेवताश्चतैरेव द्रव्यैः प्रतिद्रव्येण चतुश्चतुःसंख्याकाभिराहुतिभिः ॥ विनायकं दुर्गां वायुं आकाशं अश्विनावितिपश्चलोकपालान् वास्तोष्पतिं क्षेत्राधिपतिं इन्द्रं अग्निं यमं निर्ऋतिं वरुणं वायुं कुबेरं ईशानं ब्रह्माणं अनन्तं तैरेवद्रव्यैः प्रतिद्रव्येण द्वाभ्यां द्वाभ्यां आहुतिभ्यां न्यूनातिरिक्तदोषपरिहारार्थं घृताक्ततिलद्रव्येण व्यस्तसमस्तव्याहृत्याअष्टाविंशतिसंख्याकाभिराहुतिभिः शेषेण

---

१ संकल्पः स्वस्तिवाग्विप्रवरणं भूतनिःसृतिः । पञ्चगव्यैर्भूमिशुद्धिर्मुख्यदैवतपूजनम् ॥ अग्निप्रतिष्ठासूर्यादिग्रहस्थापनपूजनम् । देवतान्वाहितिः पात्रासादनं हविषांकृतिः ॥ यथाक्रमं त्यागहोमाविति पौर्वाङ्गकक्रमः । पूजा स्विष्टं नवाहुत्यो बलिः पूर्णाहुतिस्तथा । पूर्णपात्रविमोकाद्यग्न्यर्चनान्तेऽभिषेचनम् । मानस्तोकेति भूतिश्च देवपूजाविसर्जने । श्रेयोग्रहो दक्षिणादिदानं कर्मे- श्वरार्पणम् ॥ क्रमोऽयमुत्तराङ्गानां प्रायः स्मार्तेष्विति स्थितिः ॥ अत्रश्लोकेऽपि स्मार्तहोमे अन्वाधानं उक्तम् ॥ यद्यपि यजुषां गोभिलहरिहरगदाधरादिभिः अन्वाधानं नोक्तं तथापि प्रयोगरत्नस्मार्तोल्लासस्मार्तगङ्गाधर्यादौ अन्वाधानोक्तेः प्रचुरतरशिष्टाचारप्राप्तत्वाच्चास्माभिः अत्र प्रयोगे अन्वाधानमादृतम् ॥ रेणुकारिकायां—देवतानामभिध्यानं न करोति विमूढधीः ॥ वृथा तस्य भवेत्कर्म पूर्वाचार्यावदन्ति हि ॥ उत्प्रेक्षितमिदं कैश्चिन्नोक्तं कात्यायनादिभिः ॥ वषट्करिष्यन्ध्यायेत्तु यास्काचार्योऽब्रवीत्स्फुटम् ॥ देवताभिध्यानस्य अकरणेप्रत्यवायः पारिजाते बृहन्मनुः—देवताभिध्यानरूपं ह्यन्वाधानं समिद्धुतम् । यो मूढधीर्न कुरुते हवनस्याल्पकं फलम् ॥ परशुराममहारुद्रपद्धतौ—देवतानामभिध्यानं न करोत्यत्र मूढधीः । तस्य कर्म वृथैवस्यादिति वेदविदो विदुः ॥ २ वसिष्ठः—यदि ग्रहाणामष्टौ स्यादधिप्रत्यधिकेषु च । चतुश्चतुर्हुनेद्धेरम्बादीनां द्विद्विसङ्ख्यया ॥

स्विष्टकृतं अग्निंस्विष्टकृतं अग्निं वायुं सूर्यं अग्नीवरुणौ अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान्देवान् मरुतः स्वर्कान् वरुणं आदित्यं अदितिं प्रजापतिं एता अङ्गप्रधानार्थादेवता एकैकयाज्याहुत्या अस्मिन्कर्मण्यहं यक्ष्ये ॥ समिद्द्वयं अग्नावादध्यात् । इति अन्वाधानम् ॥

## ॥ अथ कुशकण्डिका ॥

अग्नेर्दक्षिणतो ब्रह्मासनास्तरणम् ॥ तत्र पञ्चाशत्कुशमयं ब्रह्माणं उपवेश्य अस्मिन्कर्मणि त्वं ब्रह्मा भव ॥ भवामीति प्रतिवचनम् ॥ तत्र पूर्वेण ब्रह्मणोगमनम् ॥ ब्रह्मन्–अपःप्रणेष्यामि ॥ ॐप्रणययज्ञंदेवतावर्द्धयत्वंनाकस्यपृष्ठेयजमानोअस्तुसप्तऋषीणाᳫँसुकृतांयत्र लोकस्तत्रेमंयज्ञंयजमानंचधेहि ॥ ॐप्रणय ॥ इति ब्रह्मानुज्ञातः अग्नेरुत्तरतः प्रागग्रैः कुशैः आसनत्रयप्रकल्पनम् ॥ तत्र एकं अग्नेरुत्तरतः । द्वितीयं तदुत्तरतः । तृतीयं तत्पश्चिमे ( वायव्यामित्यर्थः ) वायव्याश्रितं वारणं चमसं दक्षिणहस्तेनादाय ॥ वामपाणौ प्रागग्रं निधाय ॥ दक्षिणहस्तोद्धृतपात्रोदकेन आत्माभिमुखं सम्पूर्य ॥ पश्चिमासने निधाय ॥ दक्षिणानामिकया जलमालभ्य ब्रह्मणोमुखमवलोकयन्––अग्नेरुत्तरतः प्राक्कल्पिते प्रणीतासने निदध्यात् ॥ ईशान्यादिपूर्वाग्रैस्त्रिभिस्त्रिभिर्दर्भैः अग्नेः परिस्तरणं तच्च प्रागुदगग्रैः दक्षिणतः प्रागग्रैः प्रत्यगुदगग्रैः उत्तरतः प्रागग्रैः ॥ अग्नेरुत्तरतःपश्चाद्वाप्रयोजनवतां पात्राणां प्राक्संस्थमुदक्संस्थं वा प्रागग्रमुदगग्रं

---

१ ब्रह्मा कौशः कार्यः तन्मूलंछन्दोगगृह्योस्ति ॥ पञ्चाशद्भिः कुशैर्ब्रह्मा इत्युक्तत्वात् पञ्चाशत्सङ्ख्याककुशबटुंस्थापयित्वेत्यर्थः नतुसाक्षाद्ब्रह्मण उपवेशनम् ॥ दक्षिणतो ब्रह्माणमुपवेश्येति चतुर्थीकर्मणि सूत्रणात् ॥ कारिकाकारोपि–अचेतनेब्रह्मशब्दः कुशमुष्टौचवेदवत् । कुशानां संनिधेयुक्तः समास्तीर्येतिलिङ्गतः ॥ कर्काचार्यास्तु सर्वत्र साक्षादेव ब्रह्मण उपवेशनं न च दक्षिणतो ब्रह्माणमुपवेश्येत्यनेन पौनरुक्त्यं, तस्यावसरज्ञापनार्थत्वादित्याहुः । तदपरे दूषयन्ति–स्थालीपाकश्रपणपूर्वकालताह्यवसरः, स चोत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वेत्यनेनैव लभ्यते, पूर्वकालतायाः समानकर्तृकयोः क्त्वावाच्यत्वात् । क्त्वाप्रत्ययार्थो ह्युत्तरकालता । तथा च उदपात्रं प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वेत्यनेन स्थालीपाकश्रपणस्योदपात्रस्थापनोत्तरकालता बोध्यते । तेन स्थालीपाककरणप्राक्कालतायाः क्त्वाप्रत्ययादेव लाभाद्व्यर्थं तदर्थं दक्षिणतो ब्रह्माणमुपवेश्येत्येतत्सूत्रं स्यादत एवं ज्ञायते-चतुर्थी कर्मादौ यत्र साक्षाद्ब्रह्मोपवेशनमुक्तं तत्रैव प्रत्यक्षब्रह्मोपवेशनं मान्यत्रेति ॥ परिशिष्टे–पञ्चाशताभवेद्ब्रह्मा तदर्द्धेन तु विष्टरः । ऊर्ध्वकेशो भवेद्ब्रह्मा लंबकेशस्तु विष्टरः ॥ दक्षिणावर्तो ब्रह्मा च वामावर्तस्तु विष्टरः ।

वा आसादनम् । पवित्रच्छेदनादर्भास्त्रयः ॥ साग्रेऽनन्तर्गर्भे पवित्रे द्वे ॥ प्रोक्षणीपात्रं ॥ आज्यस्थाली ॥ चरुस्थाली ॥ सम्मार्गकुशाःपञ्च ॥ उपयमनकुशाः सप्त ॥ समिधस्तिस्रः ॥ स्रुवः ॥ स्रुक् ॥ आज्यम् ॥ त्रिःप्रक्षालितास्तण्डुलाः[1] ॥ पूर्णपात्रं ॥ दक्षिणावरोवा यथाशक्ति हिरण्यादिद्रव्यम् ॥ अन्यान्युपकल्पनीयानि अर्कादिसमिधः तिलादिहवनीयद्रव्याणि ॥ इतिपात्रासादनम् ॥ प्रागग्रयोर्द्वयोः पवित्रयोरुपरि उदगग्राणि त्रीणि पवित्राणि निधाय उपरिप्रादेशमात्रमवशेषयित्वा अधोभागे द्वयोर्मूलेन द्वौकुशौ प्रदक्षिणीकृत्य त्रयाणां मूलाग्राणि एकीकृत्य नखैरस्पृशन् अनामिकाङ्गुष्ठाभ्यां द्वयोरग्रं छेदयेत् ॥ द्वे ग्राह्ये द्वयोर्मूलं त्रीणि च उत्तरतः क्षिपेत् ॥ प्रणीतोत्तरतः प्रोक्षणीपात्रं निधाय तत्र पात्रान्तरेण प्रणीतोदकमापूर्य पवित्राभ्यामुत्पूय ॥ पवित्रे प्रोक्षणीषु निधाय ॥ दक्षिणहस्तेन प्रोक्षणीपात्रमुत्थाप्य ॥ सव्ये पाणौ कृत्वा ॥ दक्षिणहस्तमुत्तानं कृत्वा मध्यमानामिकाङ्गुल्योः मध्यमपर्वाभ्यामपामुद्दिङ्गनम् ॥ ताभिस्तासां प्रोक्षणम् ॥ आज्यस्थाल्याः प्रोक्षणम् ॥ चरुस्थाल्याः प्रोक्षणम् ॥ सम्मार्गकुशानां प्रोक्षणम् ॥ उपयमनकुशानां प्रोक्षणम् ॥ समिधां प्रोक्षणम् ॥ स्रुवस्यप्रोक्षणम् ॥ स्रुचः प्रोक्षणम् ॥ आज्यस्य प्रोक्षणम् ॥ तण्डुलानां प्रोक्षणम् ॥ पूर्णपात्रस्य प्रोक्षणम् ॥ अन्येषामुपकल्पनीयहवनीयद्रव्याणां प्रोक्षणम् ॥ असञ्चरे प्रोक्षणीपात्रं निधाय ॥ आज्यस्थाल्यां आज्यनिर्वापो ब्रह्मणः ॥ चरुस्थाल्यां पवित्रे निधाय यजमान आचार्यो वा त्रिःप्रक्षालितांस्तण्डुलान्प्रक्षिपेत् ॥ तत्र प्रणीतोदकमासिच्य ॥ अन्यदपि जलं निषिच्य चरुस्थालीस्थितपवित्रे प्रोक्षणीषु निधाय ॥ दक्षिणतः ब्रह्मणा आज्याधिश्रयणं मध्ये यजमानेन चरोरधिश्रयणं युगपत् ॥ आज्योत्तरतः गृहीतेन ज्वलदुल्मुकेन उभयोः ऐशानीमारभ्य ऐशानीपर्यन्तं पर्यग्निकरणम् ॥ इतरथावृत्तिः[2] ॥ अर्धशृतेचरौ स्रुवस्यप्रतपनम्—दक्षिणेन स्रुवमादाय प्राञ्चमधोमुखमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्गाग्रैर्मूलतोऽग्रपर्यन्तं सम्मृज्य मूलैरग्रमारभ्य अधस्तान्मूलपर्यन्तं

१ दैवे त्रिःप्रक्षालिता ज्ञेया सकृत्पित्र्ये तु तण्डुलाः । २ अवरोक्तमुत्तर(?)हविषि ॥

सम्मृज्य प्रणीतोदकेनाभ्युक्ष्य पुनः पूर्ववत्प्रतप्य दक्षिणतो निदध्यात् सम्मार्गकुशानग्नौ प्रास्य[1] आज्योद्वासनम्—अग्नेः सकाशादाज्यं गृहीत्वा चरोः पूर्वेण नीत्वा अग्नेरुत्तरतः प्रोक्षण्याः पश्चिमे निधाय ॥ चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वा आज्यस्योत्तरतः निधाय आज्यमग्नेः पश्चादानीय स्थापयेत् ॥ चरुं आज्यस्य पूर्वेण प्रदक्षिणमानीय आज्यस्योत्तरतः[2] आसादयेत् पवित्राभ्यां आज्योत्पवनम् । अवेक्षणम् । अपद्रव्यनिरसनम् । ताभ्यामेवाज्यलिप्ताभ्यां पवित्राभ्यां प्रोक्षण्याः प्रत्युत्पवनम् । पवित्रे प्रोक्षण्यां निधाय ॥ दक्षिणहस्तेन उपयमनकुशानादाय सव्ये गृहीत्वा दक्षिणेन पाणिना घृताक्तास्तिस्रः समिधः तिष्ठन् अग्नौ प्रक्षिपेत् ॥ दक्षिणचुलुकगृहीतेन सपवित्रेण प्रोक्षण्युदकेन अग्नेः ईशानकोणादारभ्य ईशानपर्यन्तं प्रदक्षिणवत् पर्युक्षणं इतरथावृत्तिः पवित्रे प्रणीतासु निधाय ॥ अग्नेः प्रदीप्तिकरणम् ॥ ततः स्थानोपविष्टः उपयमनकुशसहितं सव्यहस्तं प्रसारिताङ्गुलिं हृदि निधाय कुशैः ब्रह्मणा अन्वारब्धः[3] दक्षिणजानु निपात्य समिद्धतमेऽग्नौ मनसा प्रजापतिं ध्यायन् प्रणवपूर्वकं तूष्णीं स्रुवेण प्राञ्चमूर्ध्वमृजुं सन्ततमाज्येन अग्नेरुत्तरप्रदेशे पूर्वाघारमाघारयति—मनसा[4] ॐप्रजापतये ( अत्र न स्वाहाकारः ) यजमानः—इदं प्रजापतये न मम ॥ प्रोक्षण्यां संस्रवप्रक्षेपः ॥ अग्नेर्दक्षिणप्रदेशे उत्तराघारमाघारयेत्—ॐइन्द्राय स्वाहा इदमिन्द्राय न मम ॥ इत्येतौ पूर्वोत्तरावाघारौ हुत्वा ॥ अग्नेरुत्तरार्द्धपूर्वार्द्धे—ॐ अग्नये स्वाहा—इदमग्नये न मम ॥ अग्नेर्दक्षिणार्द्धपूर्वार्द्धे—

---

१ अथवा—सम्मार्जनान्यपास्यत्युत्तरतः ॥ २ अधिश्रितानाम्पूर्वेण उद्वासितानांपृष्ठतः ॥ ३ अन्वारब्धआघारावाज्यभागौमहाव्याहृतयःसर्वप्रायश्चित्तं प्राजापत्यꣳस्विष्टकृच्चैतान्नित्यꣳ सर्वत्र । ४ अत्र न स्वाहाकारपठनमितिरुद्रकल्पद्रुमसम्मतं अन्येतु—ॐप्रजापतये स्वाहा—इतिमनसाध्यायन्—आहुतिर्देयेति सम्मन्वते तत्रमूलं मृग्यम् ॥ अन्येतु—प्रजापतिदेवता पदमात्रमुपांशु—यस्मिन्मन्द्रादयो न विज्ञायन्ते न स्वरो न व्यञ्जनं केवलमेवौष्ठचालनं श्वासो वा तदुपाꣳशु ॥ ५ मनसा संस्मरेत् स्वाहायुक्तं चैव प्रजापतिम् । नैर्ऋतिं दिशमाश्रित्य ऐशानीं पूर्ववद्धरेत् ॥ तत्रेन्द्राय पदं स्वाहायुक्तं चोपांशुकं भवेत् । स्वाहेत्याघारयेदेतावाघाराविति भाषितौ ॥ प्राच्यौ वा जुहुयादेतावृजू सन्ततमेव च । जुहुयादग्नयेस्वाहा सोमायेति तथा पराम् ॥ प्रथमेशानकोणाग्रे द्वितीयाग्नेयकोणगा । सुसमिद्धेऽथवा वह्नौ होतव्या चोत्तराहुतिः ॥ ६ प्रधानꣳ स्वामीफलयोगात् । स च बहुकर्तृकहोमे यथाकालं प्रत्याहुतित्यागस्य कर्तुमशक्यत्वात् सर्वं होमद्रव्यजातं देवताश्च मनसा ध्यात्वा इदं यथादैवतमस्तु न ममेत्येवंरूपो द्रव्यत्यागः कार्यः ॥

ॐ सोमायस्वाहा–इदंसोमायनमम ॥ ततोयजमानः द्रव्यत्यागसङ्कल्पं कुर्यात् । यथा–हस्ते जलमादाय इदंसम्पादितं समिच्चरुतिलाज्यादि हवनीयद्रव्यं या या यक्ष्यमाणदेवता तस्यै तस्यै देवतायै मया परित्यक्तं न मम यथादैवतमस्तु ॥ अग्निपूजनम्–ॐ अग्नेनयसुपथा० विधेम ॥ शान्तिकेवरदनामाग्नयेनमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥ सप्तजिह्वाख्यमुद्रां प्रदर्श्य प्रार्थना–अग्नेत्वमैश्वरं तेजः पावनं परमं-हि तत् । तस्मात्त्वदीयहृत्पद्मे सूर्यादीन्तर्पयाम्यहम् ॥ तत आचार्यादयः सावधानाः यजमानाभीष्टसिद्धिप्राप्त्यर्थं होमं कुर्युः ॥ अथ वराहुतिः[1]–ॐगणानान्त्वा० सिगर्भधꣳस्वाहा ॥ पयोदधिमध्वाज्यप्लुताः समिधः तथा चरुंतिलद्रव्यंचाभिघार्य होतारो विप्राः अर्कसमिदाज्यचरुतिलेति द्रव्यचतुष्टयं यथाविभागं गृहीत्वा–आकृष्णेनेत्यस्यहिरण्यस्तूपआङ्गिरसऋषिः त्रिष्टुप्छन्दः सूर्योदेवता सूर्यप्रीतये कपिलाग्नावर्कसमिच्चरुतिलाज्यहोमेविनियोगः १ ॐआकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन्त्स्वाहा ॥ ४३/३३ ॥ इति मन्त्रेण अष्टसंख्यया अन्वाधानानुसारं वा समिदादिद्रव्यैर्होमः कार्यः ॥

पालाश्यः समिदाज्यचरुतिलेति द्रव्यचतुष्टयं गृहीत्वा–इमन्देवा इत्यस्य वरुणऋषिः अत्यष्टीछन्दः सोमोदेवता सोमप्रीतये पिङ्गलाग्नौ पलाशसमिच्चरुतिलाज्यहोमेविनियोगः–२ ॐइमन्देवाऽअसपत्नꣳसुवध्वम्महतेक्षत्त्रायमहतेज्ज्यैष्ठ्यायमहतेजानराज्ज्यायेन्द्रस्येन्द्रियाय ॥ इमममुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्माकम्ब्राह्मणानाꣳराजास्वाहा ॥ ४०/९ ॥ अष्टसंख्यया अन्वाधानानुसारं वा होमः ॥

खादिरसमिच्चरुतिलाज्यद्रव्यंगृहीत्वा–अग्निर्म्मूर्द्धेत्यस्य विरूपाक्षऋषिः गायत्रीछन्दः अङ्गारकोदेवताअङ्गारकप्रीतयेधूमकेत्वग्नौ खादिरसमिच्चरुतिलाज्यहोमेविनियोगः–३ ॐअग्निर्म्मूर्द्धादिवꣳककुत्पतिः पृथिव्याऽअयम् ॥ अपाꣳरेताꣳसिजिन्वतिस्वाहा ॥ १२/३ ॥ अष्टसंख्यया अन्वाधानानुसारं वा होमः कार्यः ॥

---

१ हेमाद्रौ देवीपुराणे–गणाधिपतये देया प्रथमा तु वराहुतिः । अन्यथा विफलं विप्र भवतीह न संशयः ॥

॥ ३३ ॥

अपामार्गसामिदाज्यचरुतिलेति द्रव्यचतुष्टयं गृहीत्वा—उद्बुद्ध्यस्वेत्यस्य परमेष्ठीऋषिः त्रिष्टुप्छन्दः बुधो देवता बुधप्रीतये जठरनामाग्नौ अपामार्गसमिच्चरुतिलाज्यहोमेविनियोगः—४ ॐउद्बुद्ध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्तेसᳬसृजेथामयञ्च ॥ अस्मिन्त्सधस्थेऽअद्ध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदतस्वाहा ॥ $\frac{६१}{१८}$ ॥ अष्टसंख्यया अन्वाधानानुसारं वा होमः कार्यः ॥

अश्वत्थसमिच्चरुतिलाज्यद्रव्यं गृहीत्वा—बृहस्पतइत्यस्य गृत्समदऋषिः त्रिष्टुप्छन्दः बृहस्पतिर्देवता बृहस्पतिप्रीतये शिखिनामाग्नौ अश्वत्थसमिच्चरुतिलाज्यहोमेविनियोगः—५ ॐबृहस्पतेऽअतियदर्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रᳬस्वाहा ॥ $\frac{३}{२६}$ ॥ अष्टसंख्यया अन्वाधानानुसारं वा होमः कार्यः ॥

उदुम्बरसमिच्चरुतिलाज्यद्रव्यं गृहीत्वा—अन्नात्परिस्रुतइत्यस्य अश्विसरस्वतीन्द्राऋषयः अतिजगतीछन्दः शुक्रोदेवता शुक्रप्रीतये हाटकाग्नौ उदुम्बरसमिच्चरुतिलाज्यहोमे विनियोगः—६ ॐअन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्षत्रम्पयᳬसोमम्प्रजापतिᳬ ॥ ऋतेनसत्यमिन्द्रियं विपानᳬशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधुस्वाहा ॥ $\frac{७५}{१९}$ ॥ अष्टसंख्यया अन्वाधानानुसारं वा होमः कार्यः ॥

शमीसमिच्चरुतिलाज्यद्रव्यं गृहीत्वा—शन्नोदेवीरित्यस्य दध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः शनैश्चरो देवता शनैश्चरप्रीतये महातेजसाग्नौशमीसमिच्चरुतिलाज्यहोमे विनियोगः—७ ॐशन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंय्योरभिस्रवन्तुनᳬ स्वाहा ॥ $\frac{१२}{३६}$ ॥ अष्टसंख्यया अन्वाधानानुसारं वा होमः कार्यः ॥

दूर्वासमिच्चरुतिलाज्यद्रव्यं गृहीत्वा—कयानश्चित्रइत्यस्यवामदेवऋषिः गायत्रीछन्दः राहुर्देवता राहुप्रीतये शुचिनामाग्नौ दूर्वासमिच्चरुतिलाज्यहोमे विनियोगः—८ ॐकयानश्चित्रऽआभुवदूतीसदावृधᳬसखा ॥ कयाशचिष्ठयावृतास्वाहा ॥ $\frac{३९}{२७}$ ॥ अष्टसंख्यया अन्वाधानानुसारं वा होमः कार्यः ॥

कुशसमिच्चरुतिलाज्यद्रव्यं गृहीत्वा—केतुङ्कृण्वन्नित्यस्य मधुच्छन्दाऋषिः अनिरुक्तागायत्रीछन्दः केतवो देवता केतुप्रीतये हुताशनाग्नौ कुशसमिच्चरुतिलाज्यहोमे विनियोगः—१ ॐकेतुङ्कृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे ॥ समुषद्भिरजायथाः स्वाहा ॥ $\frac{३७}{२९}$ ॥ अष्टसंख्यया अन्वाधानानुसारं वा होमः कार्यः ॥ इति ग्रहहोमः ॥

## ॥ अथ अधिदेवतानां होमः ॥

१ पलाशसमिच्चरुतिलाज्यद्रव्यंगृहीत्वा—त्र्यम्बकमित्यस्य वसिष्ठऋषिः अनुष्टुप्छन्दः त्र्यम्बको देवता ईश्वरप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐत्र्यम्बकंय्यजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात्स्वाहा ॥ $\frac{६०}{३}$ ॥ इत्यनेन प्रतिद्रव्यं चतुश्चतुःसंख्याकाभिराहुतिभिः अन्वाधानानुसारं वा होमः कार्यः ॥

२ श्रीश्चतइत्यस्यउत्तरनारायणऋषिः त्रिष्टुप्छन्दः उमादेवता उमाप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐश्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्व्वलोकम्मऽइषाणस्वाहा ॥ $\frac{२२}{३१}$ ॥ इत्यनेन प्रतिद्रव्यं चतुश्चतुःसंख्याकाभिराहुतिभिः अन्वाधानानुसारं वा होमः कार्यः ॥

३ यदक्रन्दइत्यस्य भार्गवजमदग्निदीर्घतमा ऋषयः त्रिष्टुप्छन्दः स्कन्दोदेवता स्कन्दप्रीतयेपलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐयदक्रन्दः प्प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअर्वन्त्स्वाहा ॥ $\frac{१२}{२९}$ ॥ इत्यनेन प्रतिद्रव्यं चतुश्चतुःसंख्याकाभिराहुतिभिः अन्वाधानानुसारं वा होमः कार्यः ॥

---

१ रोहिताग्नौ वा । २ अधिदेवतानां सर्वेषां पलाशसमिद्भिरेव होमः ॥

४ - विष्णोरराटमित्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः विष्णुर्देवता विष्णुप्रीतये पलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐ विष्णोरराट मसिविष्णोꣳश्नप्त्रेस्थोविष्णोꣳस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वास्वाहा ॥ २१/५ ॥ इत्यनेन प्रतिद्रव्यं चतुश्चतुःसंख्याकाभिराहुतिभिः अन्वाधानानुसारं वा होमः कार्यः ॥

५ आब्रह्मन्नित्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः ब्रह्मादेवता ब्रह्मप्रीतये पलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐआब्रह्मन्ब्राह्मणो-ब्रह्मवर्च्चसीजायतामाराष्ट्रेराजन्न्यꣳशूरऽइषव्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुꣳसप्तिꣳपुरन्धिर्य्योषाजिष्णूरथेष्ठाꣳसभेयो-युवास्ययजमानस्यवीरोजायतान्निकामेनिकामेनꣳपर्ज्जन्न्योवर्षतुफलवत्योनऽओषधयꣳपच्च्यन्तांय्योगक्षेमोनः कल्पताꣳस्वाहा ॥ २२/२२ ॥ इत्यनेन प्रतिद्रव्यं चतुश्चतुःसंख्याकाभिराहुतिभिः अन्वाधानानुसारेण वा होमः कार्यः ॥

६ सजोषाइन्द्रइत्यस्य विश्वामित्रऋषिः त्रिष्टुप्छन्दः इन्द्रोदेवता इन्द्रप्रीतये पलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐसजोषाऽइन्द्र-सगणोमरुद्भिꣳसोमम्पिबवृत्रहाशूरविद्वान् ॥ जहिशत्त्रूँ१ रपमृधोनुदस्वाथाभयङ्कृणुहिविश्वतोनꣳस्वाहा ॥ ३७/७ ॥ इत्यनेन प्रतिद्रव्यं चतुश्चतुः संख्याकाभिराहुतिभिः अन्वाधानानुसारं वा होमः कार्यः॥

७ यमायत्वेत्यस्य दध्यङ्ङाथर्वणऋषिः यजुश्छन्दः यमो देवता यमप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐयमायत्वाङ्गिर-स्वतेपितृमतेस्वाहा ॥ स्वाहाघर्म्मायस्वाहाघर्म्मꣳपित्रेस्वाहा ॥ ९/३८ ॥ चतुश्चतुःसंख्याकाभिराहुतिभिः अन्वाधानानुसारं वा होमः कार्यः ॥

८ कार्षिरसीत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः कालोदेवता कालप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐकार्षिरसिसमु-द्रस्यत्वाक्षित्त्याऽउन्नयामि॥ समापोऽअद्भिरग्मतसमोषधीभिरोषधीꣳस्वाहा॥ २८/६ ॥ चतुश्चतुःसंख्याकाभिराहुतिभिः अन्वाधानानुसारं वा होमः॥

७

९ चित्रावसोरित्यस्य हिरण्यस्तूपऋषिः यजुर्जगतीछन्दः चित्रगुप्तो देवता चित्रगुप्तप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—

ॐ चित्रावसोस्वस्तितेपारमशीयस्वाहा ॥ १८/३ ॥ चतुश्चतुःसंख्याकाभिराहुतिभिः अन्वाधानानुसारं वा होमः कार्यः ॥ इत्यधिदेवतानां होमः ॥

## ॥ अथ प्रत्यधिदेवतानां होमः ॥

१ अग्निन्दूतमित्यस्य विरूपऋषिः गायत्रीछन्दः अग्निर्देवता अग्निप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ आसादयादिहस्वाहा ॥ १७/२२ ॥ इत्यनेनप्रतिद्रव्यंचतुश्चतुःसंख्याकाभिराहुतिभिरन्वाधानानुसारंवाहोमःकार्यः ॥

२ आपोहिष्ठेत्यस्यसिन्धुद्वीपऋषिः आपोदेवता गायत्रीछन्दः अपांप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायचक्षसेस्वाहा ॥ ५०/११ ॥ प्रतिद्रव्यं चतुश्चतुःसंख्याकाभिराहुतिभिरन्वाधानानुसारं वा होमः कार्यः ॥

३ स्योनापृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः पृथ्वीदेवता पृथ्वीप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाःस्वाहा ॥ १३/३६ ॥ प्रतिद्रव्यं चतुश्चतुःसंख्याकाभिराहुतिभिरन्वाधानानुसारं वा होमः ॥

४ इदंविष्णुरित्यस्यमेधातिथिर्ऋषिः गायत्रीछन्दः विष्णुर्देवता विष्णुप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳫँसुरेस्वाहा ॥ १५/५ ॥ प्रतिद्रव्यं चतुश्चतुःसंख्याकाभिराहुतिभिरन्वाधानानुसारं वा होमः कार्यः ॥

५ त्रातारमिन्द्रमित्यस्यगर्गऋषिः त्रिष्टुप्छन्दः इन्द्रोदेवता इन्द्रप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ त्रातारमिन्द्रमवितारमिन्द्रᳫँहवेहवेसुहवᳫँशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रᳫँस्वस्तिनोमघवाधात्विन्द्रःस्वाहा ॥ ५०/२० ॥ इत्यनेन प्रतिद्रव्यं चतुश्चतुःसंख्याकाभिराहुतिभिः अन्वाधानानुसारं वा होमः कार्यः ॥

६ अदित्यैरास्ना इत्यस्य दध्यङ्ङाथर्वणऋषिः यजुश्छन्दः इन्द्राणीदेवता इन्द्राणीप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ अदित्यैरास्नासीन्द्राण्याऽउष्णीषः ॥ पूषासिघर्म्मायदीष्वस्वाहा ॥ ३/३८ ॥ चतुश्चतुःसंख्याकाभिराहुतिभिः अन्वाधानानुसारं वा होमः ॥

७ प्रजापत इत्यस्य हिरण्यगर्भऋषिः त्रिष्टुप्छन्दः प्रजापतिर्देवता प्रजापतिप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐप्रजापते-नत्वदेतान्यन्योविश्वारूपाणिपरितावभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयꣳस्यामपतयोरयीणाꣳस्वाहा ॥ $\frac{६५}{२३}$ ॥ इत्यनेन प्रतिद्रव्यं चतुश्चतुःसंख्याकाभिराहुतिभिरन्वाधानानुसारं वा होमः कार्यः ॥

८ नमोस्तुसर्पेभ्यइत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः सर्पादेवताः सर्पप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐनमोस्तु-सर्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यः सर्पेभ्योनमः स्वाहा ॥$\frac{६}{१३}$॥ चतुश्चतुःसंख्याकाभिराहुतिभिरन्वाधानानुसारंवाहोमः॥

९ ब्रह्मयज्ञानमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः ब्रह्मादेवता ब्रह्मप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐब्रह्मयज्ञानम्प्र-थमम्पुरस्ताद्विसीमत?सुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठा?सतश्चयोनिमसतश्चविवः स्वाहा ॥ $\frac{३}{१३}$ ॥ इत्यनेन प्रतिद्रव्यं चतुश्चतुःसंख्याकाभिराहुतिभिः अन्वाधानानुसारं वा होमः कार्यः ॥ इति प्रत्यधिदेवतानां होमः ॥

## ॥ अथ विनायकादिपञ्चलोकपालदेवताहोमः ॥

विनायकादिपञ्चलोकपालान् स्वस्वमन्त्रैः प्रत्येकं प्रतिद्रव्यं द्वाभ्यां द्वाभ्यां आहुतिभ्यां अन्वाधानानुसारं वा होमः कार्यः स च यथा—

१ गणानान्त्वेत्यस्य प्रजापतिर्ऋषिः यजुश्छन्दःगणपतिर्देवतागणपतिप्रीतयेपलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐगणानान्त्वा-गणपतिꣳहवामहेप्रियाणान्त्वाप्रियपतिꣳहवामहेनिधीनान्त्वानिधिपतिꣳहवामहेवसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधꣳस्वाहा॥$\frac{१९}{२३}$॥

२ अम्बेअम्बिकइत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दःदुर्गादेवतादुर्गाप्रीतयेपलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐअम्बेऽअम्बिके-म्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वक?सुभद्रिकाङ्काम्पीलवासिनीꣳस्वाहा ॥ $\frac{१८}{२३}$ ॥

३ आनइत्यस्यवासिष्ठऋषिःत्रिष्टुप्छन्दःवायुर्देवतावायुप्रीतयेपलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐआनोनियुद्भिः शतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानःस्वाहा ॥ २८/२७ ॥

४ घृतंघृतपावानइत्यस्य प्रजापतिर्ऋषिःऋचांपंक्तिछन्दःआकाशोदेवताआकाशप्रीतये पलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐघृतंघृतपावानःपिबतवसांवसापावानःपिबतान्तरिक्षस्यहविरसिस्वाहा ॥ दिशः प्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यःस्वाहा ॥ १९/६ ॥

५ यावाङ्कशेत्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः अश्विनौदेवता अश्विनोःप्रीतये पलाशसमिचरुतिलाज्यहोमेविनियोगः—ॐयावाङ्कशामधुमत्यश्विनासूनृतावती ॥ तयायज्ञम्मिमिक्षतꣳस्वाहा ॥ ११/७ ॥ इति विनायकादिपञ्चलोकपालदेवताहोमः

## ॥ अथ वास्तुक्षेत्रपालयोर्होमः ॥

वास्तुक्षेत्रपालौस्वस्वमंत्राभ्याप्रत्येकंप्रतिद्रव्यंद्वाभ्याद्वाभ्यांआहुतिभ्यांअन्वाधानानुसारं वा होमः कार्यः सचयथा हस्तेजलमादाय—

१ वास्तोष्पतइत्यस्य वासिष्ठऋषिः त्रिष्टुप्छन्दःवास्तोष्पतिर्देवतावास्तोष्पतिप्रीतये औदुम्बरसमिच्चरुतिलाज्यहोमेविनियोगः—ॐवास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशो अनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतुष्पदेस्वाहा ॥

२ नहिस्पशमविदमित्यस्य विश्वामित्रऋषिः त्रिष्टुप्छन्दःक्षेत्राधिपतिर्देवताक्षेत्राधिपतिप्रीतयेपलाशसमिचरुतिलाज्यहोमेविनियोगः—ॐनहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः ॥ एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरङ्क्षैत्रजित्यायदेवाःस्वाहा ॥ ६०/३३ ॥

## ॥ अथ दशदिक्पालहोमः ॥

इन्द्रादिदशदिक्पालान्स्वस्वमन्त्रैः प्रत्येकंप्रतिद्रव्यंद्वाभ्यांद्वाभ्यांआहुतिभ्यांअन्वाधानानुसारंवाहोमःकार्यःसचयथा—हस्तेजलमादाय—

१ त्रातारमित्यस्य गर्गऋषिःत्रिष्टुप्छन्दः इन्द्रोदेवताइन्द्रप्रीतये पलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐत्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः स्वाहा ॥ $\frac{५०}{२०}$ ॥

२ त्वन्नोऽअग्नेइत्यस्याहिरण्यस्तूपआङ्गिरसऋषिःजगतीछन्दःअग्निर्देवताअग्निप्रीतये पलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐत्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमꣳशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत्स्वाहा ॥ $\frac{३}{२१}$ ॥

३ यमायेत्यस्य दधीचऋषिःआसुर्युष्णिक्छन्दःयमोदेवता यमप्रीतये पलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐयमायत्वाङ्गिरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्म्मायस्वाहाघर्म्मःपित्रेस्वाहा ॥ $\frac{९}{३८}$ ॥

४ असुन्वन्तमित्यस्य प्रजापतिर्ऋषिःत्रिष्टुप्छन्दःनिर्ऋतिर्देवतानिर्ऋतिप्रीतये पलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐअसुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तुस्वाहा ॥ $\frac{६२}{१२}$ ॥

५ तत्त्वायामीत्यस्य शुनःशेपऋषिःत्रिष्टुप्छन्दःवरुणोदेवतावरुणप्रीतये पलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐतत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीःस्वाहा ॥ $\frac{२}{२१}$ ॥

६ आनोनियुद्भिरित्यस्य वसिष्ठऋषिःत्रिष्टुप्छन्दःवायुर्देवतावायुप्रीतये पलाशसमिच्चरुतिलाज्यहोमेविनियोगः—आनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानःस्वाहा ॥ $\frac{२८}{२७}$ ॥

७ वयꣳसोमेत्यस्य बन्धुर्ऋषिः गायत्रीछन्दः सोमोदेवतासोमप्रीतये पलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐवयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तꣳसचेमहिस्वाहा ॥ $\frac{५६}{३}$ ॥

८ तमीशानमित्यस्य गौतमऋषिःजगतीछन्दःईशानोदेवताईशानप्रीतये पलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐतमीशानञ्जगतस्त-स्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तयेस्वाहा ॥ १८/२५ ॥

९ अस्मेरुद्रामेहनेत्यस्य प्रगाथऋषिःत्रिष्टुप्छन्दःब्रह्मादेवताब्रह्मप्रीतये पलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐअस्म्मेरुद्द्रामेहना-पर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यः शःसतेस्तुवतेधायिपज्ज्रऽइन्द्रज्ज्येष्ठाऽअस्म्माँ २ अवन्तुदेवाः स्वाहा ॥ ५०/३३ ॥

१० स्योनापृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः अनन्तोदेवता अनन्तप्रीतये पलाशसमिच्चरुतिलाज्यहोमेविनियोगः—ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्म्मसप्रथाः स्वाहा ॥ १३/३६ ॥

## ॥ अथ आचाराद्गुग्गुलहोमः[1] ॥

गुग्गुलंघृतेनाभिघार्य—त्र्यम्बकमित्यस्य वसिष्ठऋषिः अनुष्टुप्छन्दः रुद्रोदेवता त्र्यम्बकप्रीतये गुग्गुलहोमेविनियोगः—ॐत्र्यम्बकंय्य-जामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात्स्वाहा ॥ ६०/३ ॥

## ॥ अथ आचारात् शत्रुहोमः ॥

सर्षपान्घृतेनाभिघार्य—सजोषाइत्यस्य विश्वामित्रऋषिः निचृदार्षीत्रिष्टुप्छन्दः इन्द्रोदेवता शत्रुविध्वस्तये शत्रुहोमे विनियोगः—ॐसजोषाऽइन्द्रसगणोमरुद्भिः सोमम्पिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूँ२रपमृधोनुदस्वाथाभयङ्कृणुहिविश्श्वतोनः स्वाहा ॥ ३७/७ ॥

---

१ अत्र गुग्गुलहोमः शत्रुहोमः लक्ष्मीहोमश्च कृताकृतः गुर्जरदेशीयैरेवाद्रियते प्राचीनग्रन्थेषु प्रमाणाभावः ॥ २ अत्रकेचन-ॐजातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनः पर्षदतिदुर्गाणिविश्वानावेवसिन्धुंदुरितात्यग्निः ॥ इत्यपि मन्त्रं पठन्ति परं चायं मंत्रो ऋग्वेदीयत्वात् परशाखीयः ॥

## ॥ अथ आचारात् लक्ष्मीहोमः ॥

क्षीरं दूर्वा दाडिमादिहोमद्रव्याणि[1] एकीकृत्य घृतेनाभिघार्य मनसइत्यस्य दधीचऋषिः निच्यृदार्षीबृहतीछन्दः श्रीर्देवता लक्ष्मीहोमे विनियोगः—ॐमनसः कामुमाकूतिंबाचः सत्यमशीय ॥ पशूना रूपमन्नस्य रसोयशः श्रीः श्रयताम्मयिस्वाहा ॥ ३९ ॥

## ॥ अथ व्याहृतिहोमः ॥

यजमानः हस्ते जलमादाय—अस्मिन्कर्मणि देवतावदानमन्त्रतन्त्रकर्मविपर्यासमक्षिकाकीटकेशादिभिर्हविर्दुष्टदग्धपाकप्रणीतास्कन्दपरिस्तरणदहनविहितस्थाने होमाकरणाग्न्युपघातशमनकीटपतंगज्वलितान्तरागमनादिज्ञाताज्ञातदोषपरिहारार्थं अष्टोत्तरसंख्ययाघृताक्ततिलद्रव्येणव्यस्तसमस्तव्याहृतिहोमं करिष्ये ॥ पुनर्जलमादाय—भूर्भुवःस्वरितितिसृणां महाव्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुबूछन्दांसि क्रमेण अग्निवायुसूर्यादेवताः सर्वासां प्रजापतिर्देवता प्रायश्चित्तहोमे विनियोगः—ॐभूःस्वाहा—इदमग्नयेनमम ॥ ॐभुवःस्वाहा—इदं वायवे नमम ॥ ॐस्वःस्वाहा—इदं सूर्याय न मम ॥ ॐभूर्भुवःस्वःस्वाहा—इदं प्रजापतये न मम ॥ एवं सप्तविंशतिवारं होमे अष्टोत्तरशताहुतयो भवन्ति ॥ एवं होमं समाप्य उत्तराङ्गानि[2] कुर्यात् ॥

## ॥ अथ उत्तरपूजनम् ॥

हस्तेजलमादाय पूर्वोच्चारितशुभपुण्यतिथौ कृतस्य ग्रहशान्त्याख्यकर्मणः साङ्गतासिद्ध्यर्थं स्थापितदेवतानां मृडाग्नेश्चोत्तरपूजनं[3]

---

१ सीताफलं क्षीरमाज्यं दाडिमं मधुशर्कराम् । शमीपत्राणि दूर्वा च बिल्वपत्राणि तन्दुलाः ॥ कदलीफलमिश्राणि कृत्वा वै जुहुयात्ततः ॥ २ उत्तराङ्गानि—पूजास्विष्टंनवाहुत्योबलिः पूर्णाहुतिस्तथा । श्रेयः सम्पाद्य दानं च ह्यभिषेको विसर्जनम् ॥ ३ यज्ञपार्श्वे कल्पद्रुमे च—पूर्वं प्रज्वलितो ह्यग्निर्हविर्हव्यबुभुक्षितः । तृप्तो निर्धूमनिर्ज्वालो मृडाग्निः परिकीर्तितः ॥

करिष्ये ॥ गणानान्त्वेत्यस्य प्रजापतिर्ऋषिः आर्षीबृहतीछन्दः गणपतिर्देवता गणपतिपूजने विनियोगः—ॐगणानान्त्वा० ॥ ॐभूर्भुवःस्वः सिद्धिबुद्धिसहितमहागणपतयेनमः गन्धाक्षतपुष्पाणिसमर्पयामि ॥ समख्यइत्यस्य वत्सऋषिःआस्तारपङ्क्तिश्छन्दः मातृकादेवता मातृकापूजने विनियोगः—ॐसमख्येदेव्याधिया० ॥ ॐभूर्भुवःस्वः गणेशगौर्याद्यावाहितमातृभ्यो वसोर्द्धारासहिताभ्यो नमः गन्धाक्षतपुष्पाणिसमर्पयामि ॥ अग्नेनयेत्यस्य अगस्त्यऋषिः त्रिष्टुप्छन्दः अग्निर्देवता अग्निपूजने विनियोगः-ॐअग्नेनयसुपथारायेऽअस्मान्विश्वानिदेववयुनानि विद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिंविधेम ॥ ३६/५ ॥ ॐभूर्भुवःस्वः स्वाहास्वधायुतायाग्नये नमः गन्धाक्षतपुष्पाणि समर्पयामि ॥ ग्रहाइत्यस्य बृहस्पतिर्ऋषिःअनुष्टुप्छन्दः ग्रहादेवताः सूर्याद्यावाहितग्रहमण्डलदेवतापूजने विनियोगः—ॐग्रहाऽऊर्ग्याहुतयोव्यन्तो-विप्रायमतिम् ॥ तेषांविशिप्रियाणांवोहमिषमूर्ज्जंꣳसमग्रभमुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ ४/९ ॥ ॐभूर्भुवःस्वः सूर्याद्यावाहितग्रहमंडलदेवताभ्यो नमः सकलोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥ इत्युत्तरपूजा ॥

## ॥ अथ स्विष्टकृद्धोमः ॥

हविःशेषोत्तराधात्द्विर्द्विरवदानधर्मेणावदायद्विरभिघार्यब्रह्मणाअन्वारब्धः—ॐअग्नयेस्विष्टकृते स्वाहा—इदमग्नये स्विष्टकृतेनमम ॥ उदकोपस्पर्शः ॥

---

१ अवकाशे सति षोडशोपचारैः पञ्चोपचारैर्वापूजयेत् ॥ अग्नये गन्धादिकं बहिर्वेदेयमिति कल्पद्रुमकाराः ॥ अन्ये तु मध्येपूजनमिच्छन्ति । विष्णुधर्मोत्तरे—मध्येऽपि गन्धपुष्पादीन्दद्यादग्नेर्न संशयः । बहिर्नैवेद्यमात्रं तु दातव्यमिति निश्चितम् ॥ २ कल्पद्रुमे—उत्तरपूजा अत्रावसरे केचिन्मन्यन्ते अन्ये तु नवाहुतिहोमान्ते अपरे तु यजमानाभिषेकान्ते ॥ ३ अनेकदिनसाध्यहोमश्चेत्तदापर्युषितदोषपरिहारार्थं हविःशेषं स्विष्टकृदर्थं घृतमध्ये स्थापयेत् ॥ नष्टे दुष्टे वा हविषि आज्येनैव स्विष्टकृद्धोमः ॥ ४ अन्वारब्धआघारावाज्यभागौमहाव्याहृतयःसर्वप्रायश्चित्तंप्राजापत्यꣳस्विष्टकृच्च ॥ एतान्नित्यꣳसर्वत्र ॥ जयरामः—एतच्चतुर्दशाहुतिकं नित्यं सर्वकर्मसु भवति यत्र यत्र होमोस्ति ॥ तथा च—प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविःशेषात्स्विष्टकृतेसमवद्यतियावद्धविरुत्तरार्धात्स्विष्टकृत् ॥ नाज्यादशेषात् ॥ आज्यैकहविष्केकर्मणि शेषादाज्यादन्ते स्विष्टकृद्यागः ॥ तत एव होमः ॥ ततइत्युत्तरतइत्यर्थः ॥ असंसृष्टामाहुतिभिः ॥ ५ रौद्रत्वात्—रौद्रꣳराक्षसमासुरमाभिचरणिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालोक्योपस्पृशेदपः ॥ आत्मा हृदयम् ॥ चात्कर्म च कृत्वेति ॥

## ॥ अथ नवाहुतयः ॥

भूरित्यस्य प्रजापतिर्ऋषिः गायत्रीछन्दः अग्निर्देवता भुवरित्यस्य प्रजापतिर्ऋषिः उष्णिक्छन्दः वायुर्देवता स्वरित्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः सूर्योदेवता त्वन्नोअग्नइत्यस्य वामदेवऋषिः त्रिष्टुप्छन्दः अग्नीवरुणौदेवते सत्वन्नइत्यस्य वामदेवऋषिः त्रिष्टुप्छन्दः अग्नीवरुणौ देवते अयाश्चाग्नइत्यस्य वामदेवऋषिः बृहतीछन्दः अग्निर्देवता येतेशतमित्यस्य वामदेवऋषिः त्रिष्टुप्छन्दः वरुणःसविताविष्णुर्विश्वेदेवामरुतः-स्वर्काश्चदेवताः उदुत्तममित्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणादयो देवताः प्रजापतयइत्यस्य ब्रह्माऋषिः छन्दोऽभावः प्रजापतिर्देवता सर्वेषांहोमेविनियोगः—ब्रह्मणाअन्वारब्धः—ॐभूः स्वाहा—इदमग्नये नमम ॥१॥ ॐभुवः स्वाहा—इदं वायवे न मम ॥ २ ॥ ॐस्वः स्वाहा—इदं सूर्याय न मम ॥ ३ ॥ ॐत्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाᳬसिप्रमुमुग्ध्यस्मत्स्वाहा ३/२१ ॥ इदमग्नीवरुणाभ्यां न मम ॥ ४ ॥ ॐसत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोअस्याऽउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणᳬरराणोवीहिमृडीकᳬसुहवोनऽएधिस्वाहा ॥ ४/२१ ॥इदमग्नीवरुणाभ्यांनमम ५॥ ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्वमयाअसि॥ अयानोयज्ञंवहास्ययानोधेहिभेषजᳬस्वाहा—इदमग्नये अयसे न मम ॥ ६ ॥ ॐयेतेशतंवरुणयेसहस्रंयज्ञियाःपाशाविततामहान्तः ॥ तेभिर्नोऽअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काःस्वाहा—इदं वरुणाय सवित्रे विष्णवे विश्वेभ्योदेवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥७॥ ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमᳬश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोऽअदितयेस्यामस्वाहा १२/१२ इदंवरुणाय आदित्याय अदितये च न मम ॥ ८ ॥ ॐप्रजापतयेस्वाहा—इदं प्रजापतये न मम ॥ ९ ॥

## ॥ अथ बलिदानम् ॥

हस्ते जलमादाय—कृतस्य ग्रहशान्त्याख्यस्य कर्मणः साङ्गतासिद्ध्यर्थं दिक्पालपूर्वकं स्थापितदेवताभ्यो बलिदानं करिष्ये ॥

१ त्रातारमित्यस्य गर्गऋषिः त्रिष्टुप्छन्दः इन्द्रोदेवता इन्द्रप्रीतये बलिदाने विनियोगः—ॐत्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳ-शूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ ५०/२० ॥ प्राच्यांइन्द्रंसाङ्गंसपरिवारंसायुधंसशक्तिकंएभिर्गन्धाद्युपचारै-स्त्वामहंपूजयामि ॥ इन्द्रायसाङ्गायसपरिवारायसायुधायसशक्तिकायइमंसदीपमाषभक्तबलिंसमर्पयामि ॥ भो इन्द्र दिशंरक्षबलिंभक्षममसकुटु-म्बस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव ॥ अनेन बलिदानेन इन्द्रः प्रीयताम् ॥

२ त्वन्नोऽअग्नइत्यस्य हिरण्यस्तूपआङ्गिरसऋषिः जगतीछन्दः अग्निर्देवताअग्निप्रीत्यर्थेबलिदानेविनियोगः—ॐत्वन्नोऽअग्नेवरुणस्य-विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमꣳशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥ ३/२१ ॥ आग्नेय्यां अग्निं साङ्गं० एभिर्गन्धा० अग्नये साङ्गाय सपरिवारायसायुधाय सशक्तिकायइमंसदीपमाष० स० भोअग्ने दिशं० ममसकुटुम्बस्या० आ :कर्ता० अनेनबलि० अग्निःप्रीयताम्॥

३ यमायेत्यस्य दधीचऋषिः आसुर्युष्णिक्छन्दः यमोदेवता यमप्रीत्यर्थे बलिदाने विनियोगः—ॐयमायत्वाङ्गिरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्म्मायस्वाहाघर्म्मःपित्रे ॥ ९/३८ ॥ दक्षिणस्यांयमं० एभिर्गन्धा० यमायसाङ्गाय० भोयम दिशं० ममसकुटुम्बस्याभ्युदयंकुरु आयुःकर्ता

---

१ दिक्पालेभ्यः एकतन्त्रेण बलिदानपक्षे—ॐप्राच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहादक्षिणायैदिशेस्वाहार्वाच्यैदिशेस्वाहाप्रतीच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहोदीच्यैदिशेस्वाहार्वाच्यैदिशे-स्वाहोर्ध्वायैदिशेस्वाहार्वाच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहा ॥ २४/२६ ॥ इन्द्रादिदशदिक्पालेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सशक्तिकेभ्यः इमंस० माष० बलिंस० मि ॥ भो भो इन्द्रादिदशदिक्पालाः दिशं रक्षत बलिं भक्षत मम सकुटुंबस्याभ्युदयं कुरुत ॥ आयुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः निर्विघ्नकर्तारः वरदा भवत अनेन पूजनपूर्वकब-लिदानेन इन्द्रादिदशदिक्पालाः प्रीयन्ताम् ॥

क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदोभव अनेनबलिदानेन यमः प्रीयताम् ॥

४ असुन्वन्तमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः निर्ऋतिर्देवतानिर्ऋतिप्रीत्यर्थेबलिदानेविनियोगः—ॐअसुन्वन्तमयजमानमिच्छस्ते-नस्येत्यामन्विहितस्करस्य ॥ _न्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ $\frac{६२}{१२}$ ॥ नैर्ऋत्यांनिर्ऋतिंसाङ्गं०एभिर्गन्धा० निर्ऋतये साङ्ग०भोनिर्ऋतेदि०ममसकुटुम्बस्याभ्युदयंकुरुआयुःक० क्षेम० शान्ति०पुष्टि० तुष्टि० निर्विघ्न०वरदोभव अनेनबलि० निर्ऋतिः प्रीयताम् ॥

५ तत्त्वायामीत्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणोदेवतावरुणप्रीत्यर्थे बलिदानेविनियोगः—ॐतत्त्वायामिब्रह्मणावन्दमानस्तदा-शास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोद्ध्युरुशꣳसमानऽआयुꣳप्रमोषीः ॥ पश्चिमायांवरुणंसाङ्गं० एभिर्गन्धा० वरुणायसाङ्ग० भोवरुणदि० ममसकुटुम्बस्याभ्युदयंकुरु आयुःकर्ता क्षेम० शान्ति० पुष्टि० तुष्टि० निर्विघ्न० वरदोभव अनेनबलि० वरुणः प्रीयताम् ॥

६ आनोनियुद्भिरित्यस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः वायुर्देवतावायुप्रीत्यर्थेबलिदानेविनियोगः—ॐआनोनियुद्भिः शतिनीभिरध्वरꣳस-हस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानः ॥ $\frac{२८}{२७}$ ॥ वायव्यांवायुंसाङ्गं०एभिर्गन्धाद्यु० वायवे-साङ्ग० भोवायोदिशं० ममसकुटुम्बस्या०आयुःकर्ता क्षेम० शान्ति० पुष्टि० तुष्टि० निर्विघ्न० वरदोभव अनेनबलि० वायुः प्रीयताम् ॥

७ वयꣳसोमेत्यस्य बन्धुर्ऋषिः गायत्रीछन्दः सोमोदेवतासोमप्रीत्यर्थेबलिदानेविनियोगःॐवयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजा-वन्तꣳसचेमहि ॥ $\frac{५६}{३}$ ॥ उदीच्यांसोमंसाङ्गं० एभिर्गन्धा० सोमायसाङ्ग०भोसोमदिशं० ममसकुटुम्बस्या० आयुःकर्ता० अ० सोमप्री० ॥

८ तमीशानमित्यस्यगौतमऋषिः जगतीछन्दः ईशानोदेवताईशानप्रीत्यर्थेबलिदानेविनियोगः—ॐतमीशानञ्जगतस्तस्थुषस्पतिन्धिय ञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ $\frac{१८}{२५}$ ॥ ईशान्यांईशानंसाङ्गं०एभिगन्धा० ईशानायसाङ्ग० भोईशानादिशं० ममसकुटुम्बस्या० आयुःकर्ता० क्षेम० शान्ति० पुष्टि० निर्विघ्न० वरदोभव अनेनबलिदानेन ईशानःप्रीयताम् ॥

९ अस्मेरुद्रामेहनेत्यस्यप्रगाथऋषिः त्रिष्टुप्छन्दः ब्रह्मादेवताब्रह्मप्रीत्यर्थे बलिदानेविनियोगः—ॐअस्म्मेरुद्रामेहनापर्वतासोवृत्रहत्ये-भरंहूतौसजोषाः॥ यःशꣳसतेस्तुवतेधायिपज्ज्रऽइन्द्रज्ज्येष्ठाऽअस्म्माँ २ अवन्तुदेवाः ॥ ५०/३३ ॥ पूर्वेशानयोर्मध्येऊर्ध्वायांब्रह्माणंसाङ्गं० एभिर्गन्धा० ब्रह्मणेसाङ्गा० भोब्रह्मन्दिशं०ममसकुटुम्बस्या० आयुःकर्ता० क्षेम० शान्ति० वरदोभव अनेनबलि० ब्रह्मा प्रीयताम् ॥

१० स्योनापृथिवीत्यस्यमेधातिथिर्ऋषिः गायत्रीछन्दः अनन्तोदेवताअनन्तप्रीत्यर्थेबलिदानेविनियोगः—ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥ १३/३६ ॥ निर्ऋतिपश्चिमयोर्मध्येअधस्थायांदिशिअनन्तंसाङ्गं०एभिर्गन्धा० अनन्तायसाङ्गाय० भो अनन्तदिशं० ममसकुटुम्बस्या० आयुःकर्ता क्षेम० शान्ति० पुष्टि० तुष्टि० निर्विघ्न० वरदोभव अनेनबलिदानेन०अनन्तः प्रीयताम् ॥

ग्रहाइत्यस्यबृहस्पतिर्ऋषिः निच्यृदार्ष्यनुष्टुप्छन्दः ग्रहादेवताः सूर्याद्यावाहितग्रहप्रीत्यर्थे बलिदानेविनियोगः—ॐग्रहाऽऊर्ज्जाहुतयोव्यन्तोविप्प्रायमतिम् ॥ तेषांविशिप्प्रियाणांवोहमिषमूर्ज्जꣳसमग्रभमुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ ४/६ ॥ आदित्याद्यावाहितदेवताः साङ्गाः सपरिवारा० एभिर्गन्धाद्युपचारैः वः अहंपूजयामि ॥ आदित्याद्यावाहितदेवताभ्यः साङ्गाभ्यः सपरिवाराभ्यः इमंसदीपमाषभक्तबलिं समर्पयामि ॥ भो भो आदित्याद्यावाहितदेवताः साङ्गाः स० इमं बलिं गृह्णीत ममसकुटुम्बस्याभ्युदयं-कुरुत आयुः कर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः निर्विघ्नकर्त्र्यः वरदाः भवत अनेनबलि० आदित्याद्यावाहितदेवताः प्री०॥

समख्य इत्यस्य वत्सऋषिः आस्तारपङ्क्तिश्छन्दः वाग्देवता मातृप्रीत्यर्थे बलिदाने विनियोगः—ॐसमख्येदेव्याधियासन्दक्षिणयोरुचक्षसा ॥ मामऽआयुःप्रमोषीर्मोऽअहन्तववीरंविदेयतवदेविसन्दृशि ॥ २३/४ ॥ सगणेशगौर्यादिमातृः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः एभिर्गन्धाद्युपचारैः वः अहंपूजयामि ॥ सगणेशगौर्यादिमातृभ्यः साङ्गाभ्यः सपरिवाराभ्यः सायुधाभ्यः सशक्तिकाभ्यः इमं सदीपमाषभक्तबलिं समर्पयामि भो भो सगणेशगौर्यादिमातरः इमं बलिंगृह्णीतममसकुटुम्बस्याभ्युदयं कुरुत आयुःकर्त्र्यः क्षेमकर्त्र्यः शान्ति-

कर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः निर्विघ्नकर्त्र्यः वरदाः भवत अनेन बलिदानेन सगणेशगौर्यादिमातरः प्रीयन्ताम् ॥

अथ क्षेत्रपालमहाबलिः—मण्डपाद्बहिः वंशपात्रे सदीपमाषभक्तदध्योदनताम्बूलदाक्षिणाकूष्माण्डोदककुम्भयुतं बलिं संस्थाप्य हरिद्राकुङ्कुमासिन्दूरपताकायुतं कृत्वा ॥ हस्तेजलमादाय अद्यपू० सकलारिष्टशान्तिपूर्वकं प्रारीप्सितस्य ग्रहशान्त्याख्यस्य कर्मणः साङ्गतासिद्ध्यर्थं क्षेत्रपालाय पूजनपूर्वकं बलिदानं करिष्ये ॥ बलिदानपात्रे पूगीफले क्षेत्रपालमावाहयेत्—नहिस्पशमित्यस्य विश्वामित्रऋषिः त्रिष्टुप्छन्दः क्षेत्रपालोदेवता क्षेत्रपालपूजने बलिदाने च विनियोगः—ॐनहिस्पशमविदन्नन्यमस्म्मा द्वैश्वानरात्पुरऽएतारमग्नेः ॥ एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरक्षैत्रजित्यायदेवाः ॥ $\frac{६०}{३३}$ ॥ ॐभूर्भुवः स्वः क्षेत्रपालायनमः क्षेत्रपालं आवाहयामि स्थापयामि ॥ क्षेत्रपालायनमः इत्यनेन षोडशोपचारैः पञ्चोपचारैर्वा सम्पूज्य प्रार्थयेत् ॐनमः क्षेत्रपालस्त्वं भूतप्रेतगणैः सह ॥ पूजां बलिं गृहाणेमं सौम्यो भवतु सर्वदा ॥ आयुरारोग्यम्मे देहि निर्विघ्नं कुरु सर्वदा ॥ मा विघ्नं मास्तु मे पापं मासन्तुपरिपन्थिनः ॥ सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः ॥ यंयंयंयक्षरूपं दशदिशि वदनं भूमिकम्पायमानं संसंसंहारमूर्तिं शिरमुकुटजटाशेखरंचन्द्रबिम्बम् ॥ दंदंदं दीर्घकेशं विकृतनखमुखंऊर्ध्वरेखाकपालं पंपंपंपापनाशं प्रणमपशुपतिंभैरवं क्षेत्रपालम् ॥ ॐनमः क्षेत्रपाल चित्रतुरङ्गवाहन सर्वभूतप्रेतपिशाचशाकिनीडाकिनीवेतालादिपरिवृत दध्योदनप्रिय सकलशक्तिसहित इमां पूजां गृहाण ॥ अनया पूजयाक्षेत्रपालः प्रीयताम् ॥ क्षेत्रपालायसाङ्गायसपरिवारायबर्बरकेशाय तप्रेतपिशाचशाकिनीकूष्माण्डगणवेतालादियुताय सायुधाय सशक्तिकाय सवाहनाय इमं सदीपमाषभक्तबलिं समर्पयामि ॥ भो क्षेत्रपाल सर्वतो दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयङ्कुरु आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव अनेन बलिदानेन क्षेत्रपालः प्रीयताम् ॥ पश्चादनवेक्षमाणेन दुर्ब्राह्मणेन शूद्रेण वा बलिं नीत्वाचतुष्पथेस्थापयेत् ॥ यजमानस्तस्यपृष्ठतो द्वारपर्यन्तंगत्वाजलंक्षिपेत्

---

१ हेमाद्रिः—सोदकुम्भं सकूष्माण्डं क्षेत्रपालबलिं हरेत् ॥ चतुर्वर्तिसमायुक्तं दीपं तत्र निधापयेत् ॥

हिङ्कारायेत्यादीनां प्रस्कण्वऋषिः दैवीत्रिष्टुप् दैवीपङ्क्तिर्दैवीजगतीछन्दांसि लिङ्गोक्तादेवता जलक्षेपणे विनियोगः—ॐहिङ्कारायस्वाहाहिङ्कृता-यस्वाहाक्रन्दतेस्वाहावक्रन्दायस्वाहाप्रोथतेस्वाहाप्रप्रोथायस्वाहागन्धायस्वाहाघ्रातायस्वाहानिविष्टायस्वाहोपविष्टायस्वाहासन्दितायस्वाहावल्गतेस्वाहासीनायस्वाहा शयानायस्वाहास्वपतेस्वाहाजाग्रतेस्वाहाकूजतेस्वाहाप्रबुद्धायस्वाहाविजृम्भमाणायस्वाहा विचृत्तायस्वाहासꣳहानायस्वाहोपस्थितायस्वाहायनाय स्वाहाप्रायणायस्वाहा ॥ $\frac{७}{२२}$ ॥ पाणिपादौ प्रक्षाल्य आचम्य पूर्णाहुतिहोमः कार्यः ॥

## ॥ अथ पूर्णाहुतिहोमः ॥

तत्र उपकल्पनीयानि आज्यस्थाली होमावशिष्टादाज्यादन्यदाज्यं वैकङ्कतीस्रुचिः खादिरस्रुवः सम्मार्गकुशाः पवित्रे नारिकेलफलं ताम्बूलवीटकं पूगीफलं पट्टवस्त्रखण्डं रक्तसूत्रं पुष्पाणि पुष्पमाला च इत्युपकल्प्य हस्ते जलमादाय अद्यपू० कृतस्य ग्रहशान्त्याख्यस्य कर्मणः सम्पूर्णतासिद्ध्यर्थं वसोर्धारासहितां पूर्णाहुतिंहोष्ये—आज्यस्थाल्यामाज्यं निरूप्य अग्नावधिश्रित्य स्रुवंस्रुचंचप्रतप्यसम्मार्गकुशैः संमृज्यप्रणीतोदकेनाभ्युक्ष्यपुनः प्रतप्ययाम्यायां निदध्यात् ॥ आज्योद्वास्य पवित्राभ्यामुत्पूय अवेक्ष्य अपद्रव्यं निरस्य स्रुवेणचतुर्वारमाज्यं स्रुचिगृहीत्वा शिष्टाचारात्तस्यां सपूगीफलं ताम्बूलवीटकं निधाय तदुपरि रक्तवस्त्रवेष्टितं पुष्पमालापरिवेष्टितं सुगन्धिद्रव्यसिन्दूरादिभिश्चर्चितं नारिकेल-

१ प्रयोगदर्पणे रेणुः—कालं स्मृत्वास्य यागस्य होमस्य परिपूर्तये । पूर्णाहुतिं करिष्येऽहं वसोर्द्धारासमन्विताम् ॥ अन्यदाज्यं समानीयाधिश्रिते स्रुक्स्रुवावुभौ । तौ प्रतप्यचसम्मार्गकुशैः सम्मृज्य सिञ्चयेत् ॥ पुनःप्रतप्य याम्यायां निदध्यात्स्रुक्स्रुवौचतौ । आज्यमुद्वास्य चोत्पूयावेक्ष्यापद्रव्यनिष्कृतिः ॥ चतुर्गृहीतमाज्यं तद्गृहीत्वास्रुचिमध्यतः । वस्त्रताम्बूलपूगादि फलपुष्प-समन्विताम् ॥ अधोमुखस्रुवच्छन्नां गन्धमाल्याद्यलङ्कृताम् । पूर्वदक्षिणहस्तेन पश्चाद्वामेन पाणिना ॥ गृहीत्वाथ स्रुचं कर्ता शङ्खसन्निभमुद्रया । वामस्तनान्तमानीय नाभिमूलां स्रुचं ततः ॥ अग्रमध्यममध्यस्थं मूलमध्यममध्यतः । पाणिद्वयेन होतव्यं पाणिरेको निरर्थकः ॥ सन्ततमाज्यधारां तां पूर्णाहुतिमथाचरेत् । समुद्रादूर्मिसूक्तेन पुनस्त्वेत्यनयाथवा ॥ सप्तते अग्न इतिवामूर्द्धान्दिवमन्त्रतः । पूर्णादर्वीतिमन्त्रेण पूर्णाहुतिमथाचरेत ॥

फलं निधाय अधोमुखस्रुवच्छन्नां तां स्रुचं चादाय यजमानान्वारब्धः आचार्यः आसीन एव पूर्णाहुतिं जुहुयात्—हस्तेजलमादाय समुद्रादूर्मिरित्येकादशऋचस्य वामदेवऋषिः त्रिष्टुप्छन्दः यज्ञपुरुषोदेवता पुनस्त्वेत्यस्य प्रजापतिर्ऋषिःत्रिष्टुप्छन्दः अग्निर्देवता सप्तते अग्नइत्यस्य सप्तऋषयः त्रिष्टुप्छन्दः अग्निर्देवता मूर्द्धानमित्यस्य भरद्वाजऋषिः त्रिष्टुप्छन्दः अग्निर्देवता पूर्णादर्वीत्यस्य और्णवाभऋषिः अनुष्टुप्छन्दः शतक्रतुर्देवता सर्वेषां पूर्णाहुतिहोमे विनियोगः[1]—ॐसमुद्रादूर्मिर्म्मधुमाँ२ उदारदुपाᳪशुनासममृतत्वमानट् ॥ घृतस्यनामगुह्यंय्यदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ ९/१७ ॥ वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानञ्चतुःशृङ्गोवमीद्गौरऽएतत् ॥ ॥ १०/१७ ॥ चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ२ऽआविवेश ॥ ११/१७ ॥ त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविन्दन् ॥ इन्द्रऽएकᳪसूर्य्यऽएकञ्जजानवेनादेकᳪस्वधयानिष्टतक्षुः ॥ १२/१७ ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥ घृतस्यधाराऽअभिचाकशीमिहिरण्ययोवेतसोमध्यऽआसाम् ॥ १३/१७ ॥ सम्म्यक्स्रवन्तिसरितोनधेनाऽअन्तर्हृदामनसापूयमानाः ॥ एतेऽअर्षन्त्यूर्म्मयोघृतस्यमृगाऽइवाक्षिपणोरीषमाणाः ॥ १४/१७ ॥ सिन्धोरिवप्राध्वनेशूघनासोवातप्रमियःपतयन्तियह्वाः ॥ घृतस्यधाराऽअरुषोनवाजीकाष्ठाभिन्दन्नूर्म्मिभिःपिन्वमानः ॥ १५/१७ ॥ अभिप्रवन्तसमनेवयोषाःकल्ल्याण्यःस्म्मयमानासो-

१ रुद्रकल्पद्रुमहोमपरिच्छेदे—केचित्तिष्ठन् पूर्णाहुतिमाचरन्ति तन्निर्मूलम् ॥ परशुराममहारुद्रप्रयोगे—होमोऽग्नौ द्विविधः प्रोक्तः श्रौतःस्मार्तश्च होतृभिः ॥ श्रौतो यजतिसंज्ञोऽसौ स्मार्तो जुहोतिसंज्ञकः ॥ तिष्ठता हूयते यत्र याज्यया चानुवाक्यया । वषट्कारप्रदानेन स श्रौतः परिकीर्तितः । यत्र होत्रोपविष्टेन स्वाहाकारेण हूयते । स स्मार्त इति विज्ञेयः पूर्णाहुत्यादि कर्मसु ॥ केचिदुत्थायकुर्वन्ति कात्यायनमतं न तत् । तस्मादध्वर्युणा कार्या पूर्णासीनेन सर्वदा ॥ २ कल्पद्रुमे तथा खण्डदीक्षितमहारुद्रपद्धतौ तु त्यृचा एव पूर्णाहुतिः ॥ अन्येषां मन्त्राणामपि विकल्पेनैव पूर्णाहुतिः प्रोक्ता यथा—सप्तते अग्नइति मन्त्रेण वा ॥ अत्र इदमग्नये सप्तवत इति त्यागः ॥ मूर्धानन्दिव इत्यनेन वा इदमग्नये वैश्वानरायेति त्यागः॥ समुद्रादूर्मिरितित्र्यृचेनवा॥ पुनस्त्वेति वा पूर्णादर्वीत्यनया वा ॥ त्रयाणामिदमग्नय इति त्यागः ॥ केचन विकल्पं विहाय सर्वैरपि मन्त्रैः पूर्णाहुतिहोमं कुर्वन्ति तदेतत्करणं मन्त्राणां विकल्पानुगमात् समुच्चये च प्रमाणाभावात् चिन्त्यमिति कल्पद्रुमकाराः ॥

ऽअग्निम् ॥ घृतस्यधाराꣳसमिधोनसन्तताजुषाणोहर्य्यतिजातवेदाꣳ ॥ १६/१७ ॥ कन्याऽइववहतुमेतवाऽउंऽअञ्ज्यञ्जानाऽअभिचाकशीमि ॥ यत्रसोमः सूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥ १७/१७ ॥ अभ्यर्षतसुष्टुतिङ्गव्यमाजिमस्म्मासुभद्राद्रविणानिधत्त ॥ इमंयज्ञन्नयतदेवतानो-घृतस्यधारामधुमत्पवन्ते ॥ १८/१७ ॥ धामन्तेविश्श्वम्भुवनमधिश्रितमन्तः समुद्रेहृद्द्यन्तरायुषि ॥ अपामनीकेसमिथेयऽआभृतस्तमश्यामम्मधुमन्तन्तऽऊर्म्मिम् ॥ ९९/१७ ॥ पुनस्त्वादित्यारुद्द्रावसवꣳसमिन्धताम्पुनर्ब्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वन्तन्न्वंवर्द्धयस्वसत्त्याः सन्तुयजमानस्यकामाꣳ ॥ ४४/१२ ॥ सप्ततेऽअग्नेसमिधः सप्तजिह्वाः सप्तऽऋषयꣳसप्तधामप्प्रियाणि ॥ सप्तहोत्त्राꣳसप्तधात्वायजन्तिसप्तयोनीरापृणस्वघृतेनस्वाहा ॥ ७९/१७ ॥ मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्श्वानरमृतऽआजातमग्निम् ॥ कविꣳसम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥ ३/३ ॥ पूर्णादर्व्विपरापतसुपूर्ण्णापुनरापत ॥ वस्नेवविक्क्रीणावहाऽइषमूर्ज्जꣳशतक्क्रतो स्वाहा ॥ ४९/३ ॥ त्यागः——इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवतेऽग्नये अद्भ्यश्च न मम ॥ संस्रवप्रक्षेपः[1] ॥ इति पूर्णाहुतिः ॥

---

१ पारस्करगृह्यसूत्रप्रथमकाण्डद्वितीयकण्डिकाभाष्ये हरिहरः—"बर्हिर्हुत्वाप्राश्नाति" अत्र प्राशनोपदेशसामर्थ्यात् प्राश्यमाकाङ्क्षितम् तत्किं हुतशेषः अन्यद्वा किञ्चित् उच्यते—पाकयज्ञेष्ववत्तस्यासर्वहोमो हुत्वा शेषप्राशनमिति कात्यायनेनोक्तेः स्रुवेणावत्तस्य होमद्रव्यस्य सर्वस्य होमनिषेधात् हुतशेषस्य च प्राशनविधानात् सर्वासामाहुतीनां होमद्रव्यं स्रुवेऽवशेषितं संस्रवत्वेन प्रसिद्धं पात्रान्तरे प्रक्षिप्यते तत्प्राश्यमिति ॥ इत्यनेन प्रमाणेन स्रुवाहुतीनामेव संस्रवप्रक्षेपः सिद्धः परंचाग्रे गदाधरभाष्ये तु स्रुवभिन्नहस्तादिभिर्हुतानां सर्वासामाहुतीनां संस्रवप्रक्षेपो दरीदृश्यते तद्यथा—गदाधरः—"बर्हिर्हुत्वा प्राश्नाति" परिस्तरणबर्हिर्हस्तेनैव हुत्वा पात्रान्तरस्थापितहोमशेषद्रव्यं भक्षयति । प्राशनस्य प्राप्तत्वात् । बर्हिर्होमोत्तरकालविधानार्थग्रहणम् । शेषरक्षणं भक्षणं च श्रौतसूत्रे उक्तमस्ति—पाकयज्ञेष्ववत्तस्याऽसर्वहोमो हुत्वा शेषप्राशनमिति ॥ अस्यार्थः—पाकशब्देन च स्मार्तहोमा उच्यन्ते तत्र होमार्थं यदवत्तं गृहीतं तस्य असर्वहोमः कर्तव्यः स्रुवादिभिर्यद्गृहीतं तद्हुत्वा किञ्चित्परिशेष्य पात्रान्तरे स्थापनमित्यर्थः । अत्र सर्वैरपिभाष्यकारैः पात्रान्तरे संस्रवप्रक्षेप उक्तः तस्मात्प्रोक्षणीपात्रे एव संस्रवप्रक्षेपः कर्तव्यः इति न किन्तु वायव्यकोणेपात्रान्तरं संस्थाप्य तत्र संस्रवप्रक्षेपो विधेयः॥कश्चन चतुर्दशाहुतीनामेव संस्रवप्रक्षेपः कर्तव्यः इति वदन्ति तन्निर्मूलं भाति अत्र विद्यमानानि—मुद्रितं पारस्करभाष्यपञ्चकम्, संस्कारगणपतिः, संस्कारनृसिंहः, संस्कारभास्करः, रेणुकारिका, वैद्यनाथी, स्मार्तोल्लासः, स्मार्तगङ्गाधरी, प्रयोगरत्नम्, कुशकण्डिकाभाष्यम्, संस्कारदीपकः, रुद्रकल्पद्रुमः इत्यादीनि

## ॥ अथ वसोर्धाराहोमः ॥

औदुम्बरीं ऋज्वीमकोटरां बाहुमात्रप्रमाणां निर्मलघृतपूरितां स्रुचं धृत्वा अग्नेरुपरि वसोर्धारां पातयेत् ॥ तस्यां च घृतधारायां स्रुक्प्रणालिकया अग्नौ पतंत्यांसत्यां वक्ष्यमाणमन्त्रान्पठेत्—सप्ततइत्यारभ्य इममित्यन्तानांसप्तर्षयऋषयः घृतमित्यस्यगृत्समदऋषिः सप्तबइत्यस्य त्रिष्टुप्छन्दः शुक्रज्योतिरित्यस्यउष्णिक्छन्दः ईदृङ्ऋतश्चेत्यनयोर्गायत्रीछन्दः ऋतजिच्चेत्यस्यउष्णिक्छन्दः ईदृक्षासइत्यस्यजगतीछन्दः स्वतवाँश्चेत्यस्यस्वराड्गायत्रीछन्दः इन्द्रमित्यस्यशक्करीछन्दः इमंघृतमित्यनयोस्त्रिष्टुप्छन्दः सप्तइत्यस्यअग्निर्देवता शुक्रज्योतिरित्यारभ्य इन्द्रमित्यन्तानांसप्तानांमरुतोदेवताः इमंघृतमित्यनयोरग्निर्देवता सर्वेषांवसोर्धाराहोमेविनियोगः ॥ ॐसप्ततेऽअग्नेसमिधं÷सप्तजिह्वा?सप्तऽऋषय८स-

---

प्राचीनानि निबन्धपुस्तकानि यावद्बुद्धिबलं विविच्य मया परिशोधितानि । परं—नोपलभ्यते चतुर्दशाहुतिष्वेव संस्रवप्रक्षेपविषये मूलवचनम् । भगवद्भिः श्रीकात्यायनाचार्यैः श्रौतकल्पे षष्ठाध्यायेषष्ठ्यां कण्डिकायां " पाकयज्ञेष्ववत्तस्यासर्वहोमो हुत्वा शेषप्राशनम्" इति सूत्रितम् ॥ पाकयज्ञेषु स्मार्तहोमेषु पक्षादिकर्मसु होमार्थं अवत्तस्य, गृहीतस्य, आज्यचर्वादेः सर्वस्य होमो न कर्तव्यः । प्रतिहोमं किञ्चित्परिशेषणीयम् । हुत्वा साङ्गं पाकयज्ञं समाप्य तस्य शेषस्यप्राशनम्-भक्षणं कर्तव्यमिति तदर्थः । एवं च नह्याघारादि चतुर्दशाहुतिष्वेव संस्रवप्रक्षेपः कार्य इति नियमः अपितुपाकहोमेषुयावत्योवाऽऽहुतयोऽपेक्ष्यन्ते सर्वासुतासुनियमेन संस्रवप्रक्षेप आवश्यक इतिसूत्रकृतामाशयः परिस्फुरति । स्मार्तमार्तण्डे " ब्रह्मणान्वारब्धश्चतुर्दशाहुतिषु संस्रवप्रक्षेपं कुर्यात्" इत्यत्र चतुर्दशाहुतिसम्बन्धः स्वानन्तरोक्तब्रह्मणान्वारब्धशब्देन कर्तव्यः सूत्रभाष्यस्मृतिषु ब्रह्मणोन्वारब्धस्य चतुर्दशाहुतिष्वेव सुस्पष्टं प्रतीयमानत्वात् । संस्रवप्रक्षेपं प्रत्याहुति कुर्यात् इति सङ्गतिः कर्तव्या । अन्यच्च-संस्रवप्रक्षेपणार्थं प्रोक्षणीपात्रं अन्यत्पात्रं च वायव्यां दिशि स्थापयेदिति स्मार्तमार्तण्डवचसोऽपि सङ्गतिः सुवचा ॥ ननु संस्रवप्रक्षेपणार्थं पात्रद्वयस्थापनं व्यर्थमितिचेन्न, प्रोक्षणीषुत्यजेच्छेषं संस्रवन्तु स्रुवाहुतेः । हस्ताहुतेर्हविःशेषक्षेपमन्यत्रकल्पयेत् ॥ इति परशुरामकारिकायाम्—आज्यहोमे संस्रवप्रक्षेपः प्रोक्षणीषु आज्यातिरिक्तचर्वादिहोमे पात्रान्तरे शेषप्रक्षेप इति पात्रद्वयस्थापनमावश्यकमेव ॥ रेणुकारिकास्वपि वचनमेतादृशमेवोपलभ्यते ॥ अत्र युक्तायुक्तमीमांसा तज्ज्ञैश्चिन्त्या ॥

१ सप्त त इत्यादयो न वसोर्धारामन्त्राः ॥ परं च शिष्टयाज्ञिकाः परंपरया पठन्ति तस्मादस्माभिरप्यत्रप्रयोगे ह्यादृताः सन्ति॥ वस्तुतस्त्वत्र वाजश्चेत्याद्यष्टानुवाकपठनपूर्वकं अथवा रुद्रकल्पद्रुमादिप्रमाणभूतग्रन्थोक्ताग्नेयादिसूक्तान्यतमसूक्तपठनपूर्वकं वसोर्धाराप्रदानं महच्छ्रेयस्करम् ॥

प्रधामप्प्रियाणि ॥ सप्तहोत्राꣳसप्तधात्वायजन्तिसप्तयोनीरापृणस्वघृतेनस्वाहा ॥ ७९/१७ ॥ शुक्रज्ज्योतिश्चचित्रज्ज्योतिश्चसत्यज्ज्योतिश्चज्ज्योतिष्माँश्च॥शुक्रश्चऽऋतपाश्चात्यꣳहाः ॥ ८०/१७ ॥ ईदृङ्चान्यादृङ्सदृङ्प्रतिसदृङ् ॥ मितश्चसम्मितश्चसभराः ॥ ८१/१७ ॥ ऋतश्चसत्यश्चध्रुवश्चधरुणश्च ॥ धर्त्ताचविधर्त्ताचविधारयः ॥ ८२/१७ ॥ ऋतजिच्चसत्यजिच्चसेनजिच्चसुषेणश्च ॥ अन्तिमित्रश्चदूरेऽअमित्रश्चगणः ॥ ८३/१७ ॥ ईदृक्षासऽएतादृक्षासऽऊषुणः सदृक्षासः प्रतिसदृक्षासऽएतन ॥ मितासश्चसम्मितासोनोऽअद्यसभरसोमरुतोयज्ञेऽअस्मिन् ॥ ८४/१७ ॥ स्वतवाँश्चप्रघासीचसान्तपनश्चगृहमेधीच ॥ क्रीडीचशाकीचोज्जेषी ॥ ८५/१७ ॥ इन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन् ॥ एवमिमंयजमानन्दैवीश्चविशोमानुषीश्चानुवर्त्मानोभवन्तु ॥ ८६/१७ ॥ इमꣳस्तनमूर्ज्जस्वन्तन्धयापाम्प्रपीनमग्नेसरिरस्यमध्ये ॥ उत्सञ्जुषस्वमधुमन्तमर्वन्त्समुद्रियꣳसदनमाविशस्व ॥ ८७/१७ ॥ घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्म्वस्यधाम ॥ अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ॥ ८८/१७ ॥ ब्राह्मणमन्त्राः—अथातोवसोर्धाराञ्जुहोति ॥ अत्रैषसर्वोऽग्निः संस्कृतःसऽएषोत्रवसुस्तस्मैदेवाऽएतान्धाराम्प्रागृह्णँस्तयैनमप्रीणँस्तद्यदेतस्मैवसवऽएतान्धाराम्प्रागृह्णँस्तस्मादेनाम्वसोर्धारेत्याचक्षतेतथैवास्माऽअयमेतान्धाराम्प्रगृह्णातितयैनंप्रीणाति ॥ १ ॥ यद्वेवैताम्वसोर्धाराञ्जुहोति॥ अभिषेकऽएवास्यैषऽएतद्वाऽएनन्देवाः सर्वंकृत्स्नꣳसँस्कृत्यायैनमेतैःकामैरभिषिञ्चत्येतयावसोर्धारयातथैनमयमेतत्सर्वंकृत्स्नꣳसंस्कृत्याथैनमेतैः कामैरभिषिञ्चत्येतयावसोर्धारयाज्येनपञ्चगृहीतेनौदुम्बर्यास्रुचातस्योक्तोबन्धुः ॥ २ ॥ वैश्वानरꣳहुत्वा ॥ शिरोवैवैश्वानरः शीर्ष्णोवाऽअन्नमद्यतेथोशीर्षतोवाऽअभिषिच्यमानोभिषिच्यतेमारुतान्हुत्वाप्राणावैमारुताः प्राणैरुवाऽअन्नमद्यतेथोप्राणेषुवाऽअभिषिच्यमानोभिषिच्यते ॥ ३ ॥ तद्वाऽअरण्येनूच्योवाग्वाऽ ॥ अरण्येनूच्योवाचोवाऽअन्नमद्यतेथोवाचावाऽअभिषिच्यमानोभिषिच्यतेतद्देतत्सर्वम्वसुसर्वेह्येतेकामाः सैषावसुमयीधारायथाक्षीरस्यवासर्पिषोवैवमारम्भायैवेयमाज्याहुतिर्हूयतेतद्यदेषावसुमयीधारातस्मादेनाम्वसोर्धारेत्याचक्षते॥४॥सऽआहऽइदञ्चमऽइदञ्चमऽइत्यनेनचत्वाप्रीणाम्यनेनचानेनचत्वाभिषिञ्चाम्यनेनचेत्येतद्थोऽइदञ्चमेदेहीदञ्चमऽइतिसायद्वैषा-

धारामि्मप्राप्नुयादथैतद्यजुः प्रतिपद्यते ॥ ५ ॥ एतद्वाऽएनन्देवाः ॥ एतेनान्नेनप्रीत्येतैःकामैरभिषिश्चत्येतयावसोर्द्धारयाथैनमेतान्कामान-
याचन्ततेभ्यऽइष्टः प्रीतोभिषिक्तऽएतान्कामान्प्रायच्छन्तथैवैनमयमेतदेतन्नान्नेनप्रीत्येतैःकामैरभिषिञ्चयैतयावसोर्द्धारयाथैनमेतान्कामान्याचते-
तस्माऽइष्टः प्रीतोभिषिक्तऽएतान्कामान्प्रयच्छतिद्वौद्वौकामौसंयुनक्त्यव्यवच्छेदाथयथाव्योमाकसौसंयुंज्यादेवन्यज्ञेनकल्पतामिति ॥ ६ ॥ एतद्वै-
देवाऽअब्रुवन् ॥ केनेमान्कामान्प्रतिगृहीष्यामऽइत्यात्मनैवेत्यब्रुवन्यज्ञोवैदेवानामात्मायज्ञऽउऽएवयजमानस्यसयद्।हयज्ञेनकल्पतामित्यात्मनामे-
कल्पंतामित्येवैतदाह॥७॥ द्वादशसुकल्पयति॥ द्वादशमासाःसँवत्सरःसँवत्सरोग्निर्यावानग्निर्यावत्यस्यमात्रातावतैवैनमेतदन्नेनप्रीणात्यथोतावतैवै-
नमेतदन्नेनाभिषिश्चति चतुर्द्दशसुकल्पयत्यष्टासुकल्पयतिदशसुकल्पयतित्रयोदशसुकल्पयति ॥ ८ ॥ अथार्धेन्द्राणि जुहोति ॥ सर्वमेतद्यदर्धे-
न्द्राणि सर्वेणैवैनमेतत्प्रीणात्यथोसर्वेणैवैनमेतदभिषिश्चति ॥ ९ ॥ अथग्रहाञ्जुहोति ॥ यज्ञोवैग्रहायज्ञेनैवैनमेतदन्नेनप्रीणात्यथोयज्ञेनैवैनमेतद-
न्नेनाभिषिश्चति ॥ १० ॥ अथैतान्यज्ञक्रतूञ्जुहोति ॥ अग्निश्चमेघर्मश्चमऽइत्येतैरेवैनमेतद्यज्ञक्रतुभिः प्रीणात्यथोऽएतैरेवैनमेतद्यज्ञक्रतुभिराभिषि-
श्चति ॥११॥ अथायुजस्तोमाञ्जुहोति ॥ सहैषयज्ञऽउवाचनग्नतायावैबिभेमीतिकातेनग्नतेत्यभितएवमापरिस्तृणीयुरितितस्मादेतदग्निमभितःपरि-
स्तृणन्तितृष्णायावैबिभेमीतिकातेतृप्तिरिति ब्राह्मणस्यैवतृप्तिमनुतृप्येयमितितस्मात्सꣳस्थितेयज्ञेब्राह्मणन्तर्प्पयितवैब्रूयाद्यज्ञमेवैतत्तर्प्पयति॥१२॥
यत्कर्मणात्यरीरिचन्यद्वान्यूनमिहाकरम् ॥ अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टꣳसुहुतंकरोतुस्वाहा ॥ नात्र संस्रवप्रक्षेपः ॥ एवं वसोर्धाराहोमं विधाय

---

१ अत्र केचन रुद्रकलशसमीपे कुशे त्यागः इति वदन्तः संस्रवप्रक्षेपं कुर्वन्ति तन्निर्मूलम् ॥ त्यागपठनरूपा क्रिया भिन्ना तथा संस्रवप्रक्षेपरूपा क्रिया भिन्ना न तयोर्नित्यसम्बन्धः ॥ रुद्रकल्पद्रुमशास्त्रार्थपरिच्छेदे-वसोर्द्धारां हुत्वा यजमान एव तस्मिन्नग्नौ स्रुक्प्रासनं करोति अत्र तां स्रुचमनुप्रास्यति यदत्राज्यलिप्तं नैतद्बहिर्द्धाग्नेरसदिति श्रवणात् ॥ महार्णवेऽपि-होमान्ते प्रासयेदग्नौ स्रुचं तामाज्यालिप्तिकाम् ॥ कात्यायनसूत्रेऽपि-वसोर्द्धारां जुहोत्यौदुम्बर्यापञ्चगृहीतसंततं यजमानोऽरण्येनूच्येऽग्निप्राप्ते वाजश्चम इत्यष्टानुवाकेन हुत्वा स्रुक्प्रासनमिति ॥ संस्रवोनाम पात्रसंलग्नहुतशेषः ॥ श्राद्धसूत्रे-सꣳस्रवान् समवनीय-इत्यस्य व्याख्याने कर्कादि भाष्यकारैः संस्रवोनाम-पात्रसंलग्नहुतशेषः इत्युक्तमस्ति ॥ श्राद्धेसंस्रवस्य शेषप्रतिपत्तिः-

अग्निंप्रदक्षिणांकुर्यात्तत्रमन्त्रः—ॐसहैषयज्ञऽउवाचनम्नतायाव्वैबिभेमीतिकातेनग्नेतत्यभितएवमापरिस्तृणीयुरितितस्मादेतदग्निमभितः परिस्तृणन्ति तृष्णायावैबिभेमीतिकातेतृप्तिरिति ब्राह्मणस्यैवतृप्तिमनुतृप्येयमितितस्मात्सᳪस्थितेयज्ञे ब्राह्मणन्तर्प्पयितवैब्रूयाद्यज्ञमेवैतत्तर्पयति ॥ श० ब्रा० काण्ड १ प्रपाठक ६ ब्राह्मण १ मन्त्र २८ इत्यग्निं प्रदक्षिणीकृत्य अग्नेः पश्चात् प्राङ्मुखो यजमान उपविश्य

**भस्मधारणम्**—ॐत्र्यायुषञ्जमदग्नेᳪ—ललाटे । कश्यपस्यत्र्यायुषम्—ग्रीवायाम् । यद्देवेषुत्र्यायुषम्—बाह्वोः । तन्नोऽअस्तुत्र्यायुषम्—हृदये ॥ ततः संस्रवप्राशनम् ॥ पवित्राभ्यां मार्जनम् ॥ अग्नौ पवित्रप्रतिपत्तिः ॥

**ब्रह्मणेपूर्णपात्रदानम्**—प्रणीतोदकेन संकल्पः—कृतस्यग्रहशान्त्याख्यस्य कर्मणः साङ्गतासिद्ध्यर्थं ब्रह्मन् इदं पूर्णपात्रं सदक्षिणाकं तुभ्यमहं संप्रददे ॥ यजमानोवदेत्—प्रतिगृह्यताम् ॥ ब्रह्मा प्रतिगृह्णाति—ॐद्यौस्त्वा ददातु पृथिवीत्वा प्रतिगृह्णातु ॥ प्रणीताविमोकः—आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम् ॥

**श्रेयोदानम्**—ब्रह्मादय ऋत्विजादयश्च आचार्यद्वारा श्रेयोदानं कुर्युः ॥ उदङ्मुखआचार्यः प्राङ्मुखसंस्थितयजमानहस्ते श्रेयोदानं

---

न्युब्जीकरणम् ॥ का० श्रौ० तृतीयाध्याये दर्शपौर्णमासेष्ट्याम्—सᳪस्रवान् जुहोति सᳪस्रवभागास्थ इति ॥ श्रौते संस्रवस्य शेषप्रतिपत्तिः—होमः ॥ स्मार्ते तु भक्षणम् ॥ बर्हिर्हुत्वा प्राश्नाति ॥ १ अनेन मन्त्रेण अग्नेः प्रदक्षिणीकरणं काशीदीक्षितेनोक्तम् ॥

२कल्पद्रुमादि ग्रन्थेषु तु वरणक्रमेण आचार्यादयः स्वं स्वं श्रेयोदानं कुर्युः इत्युक्तं सौकर्याय अत्र प्रयोगे आचार्यद्वारा श्रेयोदानमादृतमस्ति॥इदंश्रेयःसंपादनं निर्मूलत्वाद्यजमानप्रतारणमात्रमेव ऋत्विक्कर्तृककर्मणः फलस्य यजमाननिष्ठत्वात् ॥ केचित्तु पुत्रकृतवैतरणीदानजन्यश्रेयोदानवन्माघस्नानादिजन्यपुण्यदानवच्चेदमपि श्रेयोदानमविरुद्धमित्याहुः ॥ इति कल्पद्रुमकारैरुक्तम् ॥ खंडदीक्षितास्तु—श्रेयोदानंनिर्मूलत्वाद्यजमानप्रतारणमात्रमिति केचन वदन्ति तदयुक्तं विधिवाक्यश्रवणात्॥तदुक्तं प्रयोगपारिजाते वामनः—आचार्यप्रभृतिभ्यश्च प्रहार्चनफलं ततः । समिदाज्यचरूणां च तिलहोमफलं तथा ॥ तेभ्यो जपफलं तद्वद्गृह्णीयाज्जलपूर्वकम् । ततस्तेभ्यो यथाशक्ति दातव्या दक्षिणाः पृथक् ॥ इत्युक्तत्वात् ॥ परशुराममहारुद्रपद्धतौ—यथोक्तविधिना यादृक् अस्माभिर्हवनं कृतम् । तेन यज्जनितं पुण्यं स पुण्येन हि पुण्यभाक्॥ भव देवप्रसादेन तत्पुण्यं तव नो मम॥ इत्युक्त्वा शान्तिकृद्धस्ते श्रेयः संपाद्यते द्विजैः॥

कुर्यात्तद्यथा—शिवा आपः सन्तु इति यजमानहस्ते उदकं दत्वा सौमनस्यमस्तु-इति पुष्पाणि ॥ अक्षतं चारिष्टं चास्तु—इति अक्षतांश्च दत्वा ततः दीर्घमायुः शांतिः पुष्टिस्तुष्टिश्चास्तु—इतिपुनरुदकंदत्वा ॥ आचार्यः—हस्ते साक्षतसोदकपूगीफलं गृहीत्वा—भवन्नियोगेन मयाऽस्मिन् ग्रहशान्त्याख्येकर्मणियत्कृतं आचार्यत्वं तथा च एभिर्ब्राह्मणैःसह यत्कृतं ब्रह्मत्वं गाणपत्यं सादस्यं तथा च यः कृतोहोमः आचार्यत्वात् ब्रह्मत्वात् गाणपत्यात् सादस्यात् होमात् यदुत्पन्नं श्रेयः तत्तुभ्यमहं संप्रददे तेन श्रेयसा त्वं श्रेयस्वान्भव ॥ प्रतिगृह्णामि इति यजमानो वदेत् ॥

## ॥ अथ दक्षिणादानम् ॥

सपत्नीको यजमानः अग्नेः पश्चिमतः उपविष्टः उदङ्मुखानाचार्यादीन्वरणक्रमेणपूजापूर्विकांदक्षिणां दद्यात् ॥ हस्तेजलमादायदेशकालौस्मृत्वा मया आचरितस्य ग्रहशान्त्याख्यस्य कर्मणः साङ्गतासिद्धये आचार्यादिष्टेतेभ्यो ब्राह्मणेभ्यः पूजनपूर्वकं दक्षिणाप्रदानंकरिष्ये इति संकल्प्य आचार्यपूजनम्—आचार्य एतत्ते पाद्यं शिष्टाचारात्पादौ प्रक्षाल्य इदमर्घ्यं इमेतुभ्यंबार्हस्पत्येवाससी एषते गन्ध इमानि पुष्पाणि एष ते धूपः दीपः नैवेद्यताम्बूलादीन्दत्वा एतावतीं दक्षिणांतुभ्यमहंसंप्रददे ॥ ततः आचार्यायगोप्रदानम्—कुशाक्षतकुसुमजलान्यादाय पूर्वोक्तविशेषणवतिकाले मया आचरितस्य ग्रहशान्त्याख्यस्यकर्मणः फलप्रतिष्ठासिद्ध्यर्थं अमुकसगोत्रायअमुकप्रवरायशुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायिनेअमुकशर्मणे आचार्याय गोनिष्क्रयभूतमिदं हिरण्यं अग्निदैवतं तुभ्यमहं संप्रददे ॥ हिरण्यासंभवेरजतं दद्यात् । ततोब्रह्मन्नेतत्तेपाद्यमित्यादिना पूर्वोक्तप्रकारेण पूजापूर्वकं ब्रह्मणे दक्षिणां दद्यात्॥एवं सदस्याय उपद्रष्ट्रे गाणपत्याय ऋत्विग्भ्यः ग्रहजापकेभ्यश्च यथोक्तदक्षिणां दत्वा आशिषोगृह्णीयात् ॥ दानानि—स्वर्णगोभूतिलान्दद्यात्सर्वदोषापनुत्तये । स्वर्णदानमन्त्रः—हिरण्यगर्भगर्भस्थं० इदंयथा-

---

१ ब्राह्मणानां ततः पूजा कार्या शक्त्यनुसारतः । असंपूर्णं भवेत्तावद्यावद्विप्रो न पूजितः ॥ पूजिते सति विप्रेऽस्मिन् सर्वं संपूर्णतां व्रजेत् ॥

शक्तिसुवर्णं अग्निदैवतं अमुकशर्मणे तुभ्यमहं सम्प्रददे ॥ प्रतिगृह्णामि ॐदेवस्यत्वा० ॥ भूमिदानमन्त्रः—सर्वभूताश्रया भूमिर्वराहेण समुद्धृता । अनन्तसस्यफलदा ह्यतः शान्तिं प्रयच्छमे ॥ इमां भूमिं विष्णुदैवतां वा तन्निष्क्रयीभूतयथाशक्तिरजतद्रव्यं अमुकशर्मणे आचार्याय तुभ्यमहं सम्प्रददे ॐदेवस्यत्वा०॥ तिलपात्रदानम्—महर्षेर्गोत्रसम्भूताः काश्यपस्य तिलाः स्मृताः । तस्मादेषां प्रदानेन मम दोषो व्यपोहतु॥ एतां-स्तिलान् प्रजापतिदैवतान् आचार्याय तुभ्यमहं संप्रददे न मम ॥ ॐदेवस्यत्वा०॥ प्रजापतये प्रतिगृह्णामि ॥

## ॥ अथाभिषेकः ॥

तत आचार्यादयः सर्वे उदङ्मुखास्तिष्ठन्तः ग्रहवेदीशानस्थकलशोदकं पात्रान्तरे उद्धृत्य दूर्वापञ्चपल्लवैर्वक्ष्यमाणैर्वैदिकैः मन्त्रैः प्राङ्मुखोपविष्टं सकुटुम्बं यजमानं तद्वामत उपविष्टां पत्नीञ्च अभिषिञ्चेयुः । ॐआपो हिष्ठा०॥योवः॑शिवतमो० तस्माऽअरं०॥ स्तोकाना-मिन्दुम्प्रतिशूरऽइन्द्रो वृषायमाणोवृषभस्तुराषाट्॥ घृतप्रुषामनसामोदमाना॑स्वाहादेवाऽअमृतामादयन्ताम् ॥ $\frac{४६}{२०}$ ॥ आयात्विन्द्रोवसऽउप-नऽइहस्तुत॑सधमादस्तुशूरः॑ ॥ वावृधानस्तविषीर्यस्यपूर्वीर्द्यौर्नक्षत्रमभिभूतिपुष्यात् ॥ $\frac{४७}{२०}$ ॥ आनऽइन्द्रोदूरादानऽआसादभिष्टिकृदवसेयासदुग्रः ॥ ओजिष्ठेभिर्नृपतिर्वज्रबाहु॑सङ्गेसमत्सुतुर्वणिः॑पृतन्यून् ॥ $\frac{४८}{२०}$ ॥ आनऽइन्द्रो हरिभिर्यात्वच्छार्वाचीनोवसेराधसेच ॥ तिष्ठाति-वज्रीमघवाविरप्शीमंयज्ञमनुनोवाजसातौ ॥ $\frac{४९}{२०}$ ॥ त्रातारमिन्द्रं० ॥ इमम्मेवरुणश्रुधी० ॥ तत्त्वायामि०॥ त्वन्नोऽअग्नेवरुणस्य० ॥ सत्व-

१ परशुरामः—अभिषेकं मूर्ध्निहोमं माङ्गल्यं स्वस्तिवाचनम् । प्रैष्यं च मन्त्रपाठं च तिष्ठन् कुर्यात् सदैवहि॥ २ संस्कारकौस्तुभे—सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः स्थिता । विप्रपाद-क्षालने च ह्यभिषेके तु वामतः ॥ विप्रपादक्षालनं तु पित्र्यकर्मणि विहितम्—वामे पत्नी त्रिषु स्थाने पितॄणां पादशौचने । रथारोहणकाले तु ऋतुकाले सदाभवेत ॥ ३ गीतवाद्यादि मङ्गलघोषपुरःसरोऽभिषेकः कार्यः इति कल्पद्रुमकाराः ॥ परशुरामः—पीठस्थैः कुम्भतोयैश्च पञ्चपल्लवसंयुतैः। यजमानस्य कर्तव्यं स्नपनं चाभिषेचनम् ॥ ऋत्विग्भिरिहसन्तुष्टैः प्राङ्मुखैर्वा-प्युदङ्मुखैः । अभङ्गावयवैर्विप्रैस्तथा ह्युद्गीथभूषणैः मन्त्रैर्वरुणदैवत्यैः स्वशाखोक्तैः पुराणजैः । अन्यैरप्यभिषेकोक्तैरभिषेच्यं पुनः पुनः ॥

न्नोऽअग्नेऽवमोभवो० ॥ उदुत्तमंवरुणपाशं० ॥ वरुणस्योत्तम्भं० ॥ प्रातरग्निम्प्रातरिन्द्रꣳहवामहेप्रातर्म्मित्रावरुणाप्रातरश्विना ॥ प्रातर्भग-
म्पूषणम्ब्रह्मणस्पतिम्प्रातःसोममुतरुद्रꣳहुवेम ॥ ३४/३४ ॥ भगप्रणेतर्भगसत्यराधोभगेमान्धियमुदवाददन्नꣳ । भगप्रनोजनयगोभिरश्वैर्भग-
प्रनृभिर्नृवन्तःस्याम ॥ ३६/३४ ॥ इदमापꣳप्रवहतावद्यञ्चमलंचयत् ॥ यच्चाभिदुद्रोहानृतंयच्चशेपेऽअभीरुणम् ॥ आपोमातस्मादेनसꣳपवमानश्च-
मुञ्चतु ॥ १७/६ ॥ समुद्रायत्वावातायस्वाहासरिरायत्वावातायस्वाहा ॥ अनाधृष्यायत्वावातायस्वाहाप्रतिधृष्यायत्वावातायस्वाहा ॥ अवस्यवे-
त्वावातायस्वाहाशिमिदायत्वावातायस्वाहा ॥ ७/३८ ॥ पुनन्तुमापितरःसोम्यासःपुनन्तुमापितामहाःपुनन्तुप्रपितामहाꣳ ॥ पवित्रेणश-
तायुषा ॥ पुनन्तुमापितामहाःपुनन्तुप्रपितामहाꣳ॥ पवित्रेणशतायुषाविश्वमायुर्व्यश्नवै ॥ ३७/१९ ॥ अग्नऽआयूꣳषिपवसऽआसुवोर्जमिषञ्चनꣳ॥
आरेबाधस्वदुच्छुनाम् ॥ ३८/१९ ॥ पुनन्तुमादेवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदꣳपुनीहिमा ॥ ३९/१९ ॥ पवित्रेणपुनी-
हिमाशुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूꣳ१ऽरनु ॥ ४०/१९ ॥ यत्तेपवित्रमर्चिष्यग्नेविततमन्तरा ॥ ब्रह्मतेनपुनातुमा ॥ ४१/१९ ॥ पवमानꣳसोऽअ-
द्यनःपवित्रेणविचर्षणिꣳ ॥ यःपोतासपुनातुमा ॥ ४२/१९ ॥ उभाभ्यान्देवसवितꣳ पवित्रेणसवेनच ॥ माम्पुनीहिविश्वतः ॥ ४३/१९ ॥
वैश्वदेवीपुनतीदेव्यागाद्यस्यामिमाबह्व्यस्तन्वोवीतपृष्ठाꣳ ॥ तयामदन्तꣳसधमादेषुवयꣳस्यामपतयोरयीणाम् ॥ ४४/१९ ॥ आप्यायस्वसमे-
तुतेविश्वतःसोमवृष्ण्यम् ॥ भवावाजस्यसङ्गथे ॥ ११२/१२ ॥ पञ्चनद्यःसरस्वती० ॥ चित्पतिर्म्मापुनातु० ॥ शिरोमेश्रीर्यशोमुखन्त्विषिꣳके-
शाश्चश्मश्रूणि ॥ राजामेप्राणोऽअमृतꣳसम्राट्चक्षुर्विराट्श्रोत्रम् ॥ ५/२० ॥ जिह्वामेभद्रंवाङ्महोमनोमन्युःस्वराड्भामः ॥ मोदाꣳप्रमोदाऽ-
अङ्गुलीरङ्गानिमित्रम्मेसहः ॥ ६/२० ॥ बाहूमेबलमिन्द्रियꣳहस्तौमेकर्म्मवीर्य्यम् ॥ आत्माक्षत्रमुरोमम ॥ ७/२० ॥ पृष्ठीर्म्मेराष्ट्रमुदरमꣳसौ-
ग्रीवाश्चश्रोणी ॥ ऊरूऽअरत्नीजानुनीविशोमेङ्गानिसर्वतः ॥ ८/२० ॥ नाभिर्म्मेचित्तंविज्ञानम्पायुर्म्मेपचितिर्भसत् ॥ आनन्दनन्दावाण्डौ-
मेभगꣳसौभाग्यम्पसः ॥ जङ्घाभ्याम्पद्भ्यान्धर्मोस्मिविशिराजाप्रतिष्ठितꣳ ॥ ९/२० ॥ पयꣳपृथि० ॥ देवस्यत्वासवितुःप्रसवे० ॥ सर-

स्वत्यैव्वाचोयन्तुर्य्यन्त्रियेंद धामिबृहस्पतेंष्ट्वासाम्राज्ज्येनाभिषिंञ्चाम्म्यसौ ॥ ३०/९ ॥ देवस्यत्वा० ॥ सरस्वत्यैव्वाचोयन्तुर्य्यन्त्रेणाग्ने? साम्म्रा-ज्ज्येनाभिषिञ्चामि ॥ ३७/१८ ॥ देवस्यत्वा० ॥ अश्विनोर्भैषज्ज्येनतेजसेब्रह्मवर्च्चसायाभिषिञ्चामिसरस्वत्यैभैषज्येनवीर्य्यायान्नाद्यायाभिषिञ्चा-मीन्द्रस्येन्द्रियेणबलायाश्रियैयशसेभिषिञ्चामि ॥ ३/२० ॥ सोमस्यत्वाद्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसासूर्यस्यवर्चसेन्द्रस्येन्द्रियेण ॥ क्षत्राणा-ङ्क्षत्रपतिरेद्ध्यतिदिद्यून्पाहि ॥ १७/१० ॥ विश्वानिदेव० ॥ धामच्छदग्नि० ॥ त्वञ्जविष्ठ० ॥ अन्नपते० ॥ पालाशंभवति । तेनब्राह्मणोभि-षिञ्चतिब्रह्मवैपलाशोब्रह्मणैवैनमेतदभिषिञ्चति ॥ औदुम्बरंभवति । तेनस्वोभिषिञ्चत्यन्नंवाऽऊर्गुदुंबरऽऊर्ग्वैस्वंयावद्वैपुरुषस्यस्वंभवतिनैव-तावदशनायतितेनोर्क्स्वंतस्मादौदुंबरेणस्त्रोभिषिञ्चति । नैय्यग्रोधपादंभवति । तेनमित्रोराजन्योभिषिञ्चतिपद्भिर्वैन्यग्रोधꣳ प्रतिष्ठितोमित्रेण-वैराजन्यः प्रतिष्ठितस्तस्मान्नैय्यग्रोधपादेनमित्रोराजन्योभिषिञ्चति ॥ आश्वत्थंभवति । तेनवैश्योभिषिञ्चतिसयदेवादोश्वत्थेतिष्ठतऽइन्द्रोमरुत-ऽउपामंत्रयते तस्मादाश्वत्थेनवैश्योभिषिञ्चति सर्ववसुरभ्युन्मर्द्दनंभवतिपरमोवाऽएषगन्धोयत्सर्ववसुरभ्युन्मर्द्दनंगन्धेनैवैनमेतदभिषिञ्चति ॥ यद्दे-वकुल्पाञ्जुहोति । प्राणावैकुल्पाऽअमृतमुवैप्राणाऽअमृतेनैवैनमेतदभिषिञ्चति ॥ अथसामगायतिक्षत्रंवैसामक्षत्रेणैवैनमेतदभिषिञ्चत्यथोसाम्राज्यं वैसामसाम्राज्येनैवैनꣳसाम्राज्यंगमयति सर्वेषांवाऽएषवेदानाꣳरसोयत्सामसर्वेषामेवैनमेतद्वेदानाꣳरसेनाभिषिञ्चति ॥ ॐशान्तिः शान्तिःसुशा-न्तिर्भवतु ॥ हस्ते जलं गृहीत्वा आभिषेककर्तृभ्योब्राह्मणेभ्यो यथोत्साहदाक्षिणां दास्ये तेन श्रीकर्माधीशः प्रीयताम् ॥ ततोऽभिषिक्तः सप-त्नीको यजमानः सर्वौषधिभिरुद्वर्तिताङ्गः गङ्गादि शुद्धोदकेन स्नात्वाउभाभ्यामभिषिक्ताभ्यांत्यक्तानि स्नानवस्त्राण्याचार्याय दत्वा शुक्लमाल्या-म्बरधरो धृतमङ्गलतिलकः सपत्नीको यजमानः स्वासने उपविशेत् ॥

घृतपात्रदानम्—घृतपूरितकांस्यपात्रे मुखावलोकनं कुर्यात्—ॐरूपेणवोरूपमभ्यागान्तुथोवोविश्ववेदाविभजतु ॥ ऋतस्यपथा-

प्रेतंचन्द्रदक्षिणाविस्वं॑पश्यंव्युन्तरिक्षंयतस्वसदस्यैः ॥ ४५/७ ॥ ब्राह्मणम्–रूपंरूपम्प्रतिरूपोबभूवतदस्यरूपम्प्रतिचक्षणाय ॥ इन्द्रोमायाभिः पुरुरूपऽईयतेयुक्ताह्यस्यहरयःशतादशेत्ययंवैहरयोयम्वैदशचसहस्राणिबहूनिचानन्तानिचतदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्माब्रह्मस-र्वानुभूरित्यनुशासनम् ॥ इदं आज्यपात्रं सदक्षिणाकं आचार्याय तुभ्यमहं सम्प्रददे ॥

ब्राह्मणभोजनसङ्कल्पः—कृतस्य ग्रहशान्त्याख्यस्यकर्मणःसाङ्गतासिद्ध्यर्थंयथाशक्तिब्राह्मणान्भोजयिष्येतेनश्रीकर्माङ्गदेवताःप्रीयन्ताम्॥

भूयसीदक्षिणाप्रदानम्—हस्तेजलमादाय नानावेदान्तर्गतनानाशाखाध्यायिभ्यो नानागोत्रेभ्यो नानाशर्मभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च यथाशक्ति भूयसीं दक्षिणां दातुमुत्सृजे ॥ ॐतत्सदिति वदन् भूयसीं दक्षिणां दत्वा ॥ तेषां आशिषो गृह्णीयात् ॥

देवताविसर्जनम्–पुष्पाक्षतप्रक्षेपेण स्थापितदेवान् विसर्जयेत्–ॐउत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयन्तुमरुतः सुदानवऽइन्द्रप्राशूर्भ-वासचा ॥ ५६/३४ ॥ यान्तु देवगणाः सर्वे स्वशक्त्या पूजिता मया । इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ॥

पीठादिदानम्—गणेशमातृकाग्रहपीठानि अवशिष्टपूजोपस्कराणि च आचार्याय दद्यात्–हस्ते जलं गृहीत्वा इमानि गणेशमातृका-ग्रहपीठानि समूर्तिकानि सकलशानि सवस्त्राणि अवशिष्टपूजोपस्कराणि च आचार्याय तुभ्यमहं सम्प्रददे ॥

अग्निविसर्जनम्—अग्नेनयसुपथारायेऽअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिंविधेम॥ ३६/५ ॥ अग्नये नमः सकलोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥ ॐवयंहित्वाप्प्रयतियज्ञेऽअस्मिन्नग्नेहोतारमवृणीमहीह ॥ ऋधं-गयाऽऋधंगुताशमिष्ठाः प्रजानन्यज्ञमुपयाहिविद्वान्त्स्वाहा ॥ २०/८ ॥ ॐअनुवीरैरनुपुष्यास्मगोभिरन्वश्वैरनुसर्वेणपुष्टैः ॥ अनुद्विपदानु-

चतुष्पदाब्रुयन्देवानोऽयज्ञमृतुथानयन्तु ॥१९/२६॥ ॐयज्ञयज्ञङ्गच्छ० ॥ गच्छत्वं भगवन्नग्ने स्वस्थाने विश्वतोमुख । हव्यमादाय देवेभ्यः शीघ्रं देहि प्रसीद मे ॥ गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥

संपूर्णतावाचनम्—अञ्जलिं बद्ध्वा—मया यत्कृतं ग्रहशान्त्याख्यं कर्म तत् कालहीनं भक्तिहीनं शक्तिहीनं श्रद्धाहीनं च भवतां ब्राह्मणानां वचनात् सर्वं संपूर्णमच्छिद्रं चास्तु ॥ विप्रा वदेयुः—अस्तु परिपूर्णम् ॥

## ॥ अथ प्रैषात्मकपुण्याहवाचनम् ॥

स्वपुरतः पञ्चवर्णैः अष्टदलं कृत्वा तत्र भूमिं स्पृष्ट्वा—ॐमहीद्यौ?० ॥ यवप्रक्षेपः—ॐओषधय८० ॥ तदुपरिकलशस्थापनम्—ॐआजिघ्र० ॥ जलपूरणम्—ॐवरुणस्यो० ॥ गन्धप्रक्षेपः—ॐत्वाङ्गन्धर्वा० ॥ धान्यप्रक्षेपः—ॐधान्यमसि० ॥ सर्वौषधीप्रक्षेपः—ॐयाऽओषधी८० ॥ दूर्वाप्रक्षेपः—ॐकाण्डात्का० ॥ पञ्चपल्लवप्रक्षेपः—ॐअश्वत्थेवो० ॥ सप्तमृद्प्रक्षेपः—ॐस्योना० ॥ फलप्रक्षेपः—ॐया८फलि० ॥ पञ्चरत्नप्रक्षेपः—ॐपरिवाजं० ॥ हिरण्यप्रक्षेपः—ॐहिरण्यगर्भ?० ॥ रक्तसूत्रवेष्टनम्—ॐसुजातो० ॥ पूर्णपात्रम्—ॐपूर्णादर्वि० ॥ वरुणावाहनम्—ॐतत्त्वायामि० ॥ अस्मिन्कलशे वरुणं सांगं० आवा० स्था० ॥ प्रतिष्ठापनम्—ॐमनोजूति० ॥ ॐवरुणाय नमः चन्दनं सम०॥ इत्यादि पञ्चोपचारैः संपूज्य तत्त्वायामीति पुष्पाञ्जलिं समर्प्य अनेन पूजनेन वरुणः प्रीयताम् ॥ अनामिकया कलशं स्पृष्ट्वा अभिमंत्रयेत्—

१ कर्मान्ते पुण्याहवाचननिर्णयः पुण्याहवाचनसूत्रं—पुण्याहवाचनमृद्धिपूर्तेष्वृद्धिर्विवाहान्तापत्यसंस्काराः प्रतिष्ठोद्यापनादि पूर्तं तत्कर्मणश्चाद्यन्तयोः कुर्यात्॥ तथा च शौनकः—स्वस्तिवाचनमेवं तु सर्वेषामृद्धिकारकम् । आदावन्ते च कर्तव्यमिति यज्ञविदां मतम् ॥ अपरे तु—पुण्याहवाचनं शस्तमादौ स्यात् सर्वकर्मसु। कृत्वैव तद्बुधः कुर्यात् सर्वकर्माणि मानवः ॥ इत्याद्याश्वलायनवचनादादावेव कार्यमित्याहुः ॥ अत्र कुलदेशाचारतो व्यवस्था ॥

कलशस्य० दुरितक्षयकारकाः ॥ गायत्र्यादिभ्योनमः इत्यनेन पञ्चोपचारैरभ्यर्च्य कलशं प्रार्थयेत्–देवदानव० प्रसन्नो भव सर्वदा ॥ नमोनमस्ते० ॥ पाशपाणे० तावत्त्वं सान्निधो भव ॥ ततो यजमानः युग्मविप्रान् गन्धमाल्यवस्त्रदक्षिणादिभिः संपूज्य तान् उदङ्मुखानुपवेश्य पूजितकलशं कराभ्यामालभ्य–मम गृहे ॐपुण्याहं भवन्तो ब्रुवन्तु ॥ विप्राः–ॐपुण्याहम् ॥ एवं त्रिः ॥ मम गृहे ॐस्वस्ति भवन्तो ब्रुवन्तु ॥ विप्राः-ॐस्वस्ति ॥ एवं त्रिः ॥ मम गृहे ॐऋद्धिं भवन्तो ब्रुवन्तु ॥ विप्राः ॐऋद्ध्यताम् ॥ एवं त्रिः ॥ इति पुण्याहं वाचयित्वा मन्त्राशिषो गृहीत्वा–प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ ॐविष्णवे नमः ॥ विष्णवे नमः ॥ विष्णवे नमः ॥ ततो ब्राह्मणान् भोजयित्वा दीनानाथांश्चान्नादिना सन्तोष्य स्वयं सुहृन्मित्रादियुतः सोत्साहः सन्तुष्टो हविष्यं भुञ्जीत इति वैदिकग्रहशान्तिप्रयोगः ॥

---

१ संक्षिप्तपुण्याहवाचने तु कल्याणं श्रीश्चेति द्वयोर्वाचनं नोक्तं तदाह रूपनारायणीये मदनरत्ने च बौधायनः–पुण्याहं स्वस्तिऋद्धिरित्योंकारपूर्वकं त्रिस्त्रिरेकैकामाशिषो वाचयेत् ॥ एकैकमिति पुण्याहादिभिः संबद्धयते । एकैकमित्यस्यानन्तरमाशिष्यमितिशेषः । तथा च पुण्याहादिरूपामेकैकामाशिषं त्रिस्त्रिर्वाचयेदित्येवमाशिषो वाचयेदिति वाक्यार्थः ॥ २ यजमानेनान्वारब्ध आचार्यो यदि पुण्याहं वाचयेत्तदा ममास्य यजमानस्य गृहे इति वाच्यम् ॥ ३ ॐकारपूर्वकं तु ब्राह्मणजातीययजमानमात्रविषयं तत्राह यमः––पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते । एतदेव निरोंकारं कुर्यात्क्षत्रियवैश्ययोः ॥ सोंकारं ब्राह्मणे कुर्यान्निरोंकारं महीपतौ । उपांशु च तथा वैश्ये स्वस्ति शूद्रे प्रकीर्तयेत् ॥

# ग्रहशान्तिसाहित्यनी यादी.



श्रीफल ६, सुकुंश्रीफल १
सोपारी शेर १।
नाडाछडीआंटी २
कुंकु नवटांक
गुलाल शेर ०।
सफेत अबीर सेर ०।
रांगुली शेर १
कालो अबीर नवटांक
सिन्दुर नवटांक
दळेलीहरदल सेर ०॥

अगरबत्ती तोला ५
धूप[1] छूटो तोला ५
कर्पूरगोटी बंडल २
सुखडनांछोडां नवटांक
चन्दनमाटेसुखडनोककडो
चन्दन घसवामाटे ओरसियो
केसरतोलो ०।, मधतोला २
खडीसाकरसेर०।,खांडसेर०।
गोल सेर ०।, खारक सेर ०।
बदामगोला तथा पस्ता प्रत्येक

नवटांक
कोपरूं तथा किसमिस
प्रत्येक शेर ०।
जरदालु सेर ०।
अंजीर सेर ०।, काजु सेर ०।
एलची तोलो १
लविंग तोलो १
तलपाली १, जव सेर ०।
गुगल नवटांक
कपुरकाचली तोलो १

घहुंला तोलो ०॥
सरशव नवटांक
सुगंधिवालो नवटांक
सर्वौषधी[2] माटे–कुष्ट तोलो ०।
जटामांसी तोलो ०।
हरदल तोलो ०।
दारुहरदल तोलो ०।
मोरवेल तोलो ०।
शिलाजित तोलो ०।
चन्दन तोलो ०।

वज तोलो ०।, चंपो तोलो ०।
नागरमोथ तोलो०।
ए दश वस्तु कुटीने राखवी
सात[3] जातनी माटीनो विगत-
घोडालनी, हस्तिस्थाननी,
राफडानी, संगमनी,
ध्रोनी राज्यस्थाननी,
गौशालानी,
पञ्चरत्ननां[4] पडीकां बे, ते
प्रत्येकमां–सुवर्ण, हीरो,

नीलम, प्रवाल, मोती,
मुख्यकलशाराधन,
पुण्याहवाचन, तथा ग्रहना
ऐशानमांवरुणपूजनमाटे मली
त्रांबानाकलश त्रण तथा
त्रांबानीतरभाणी त्रण
त्रांबानुंअर्घपात्र १
आज्यस्थाली[5], चरुस्थाली[6]-
अनेपूर्णपात्र[7]माटे
त्रांबाना टोप एक शेर
चोखाचढे तेवा त्रण

---

१ दशाङ्गधूपः मदनरत्ने–षड्भागकुष्ठंद्विगुणो गुडश्च लाक्षात्रयंपञ्चनखस्य भागाः । हरीतकी सर्जरसं समांशं भागैकमेकं त्रिलवं शिलाजम्॥ घनस्य चत्वारि पुरस्य चैको धूपो दशाङ्गः कथितो मुनीन्द्रैः॥दर्पः–कस्तूरी ॥ कुंकुमं–केशरम् ॥ लाक्षा–लाख ॥ नखं–नखला ॥ सर्जरसः–राळ ॥ घनः–नागरमोथ ॥ पुरः–गुग्गुलइतिप्रसिद्धः ॥ २ कुष्ठं मांसी हरिद्रे द्वे मुराशैलेयचन्दने। वचाचम्पकमुस्ताचसर्वौषध्योदशस्मृताः ॥ ३ अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् । राजद्वाराच्चगोष्ठाच्चमृदमानीयनिक्षिपेत् ॥४ कनकंकुलिशंनीलंपद्मरागंचमौक्तिकम् ।एतानिपञ्चरत्नानिरत्नशास्त्रविदोविदुः ॥ ५ आज्यस्थाली रेणुः–आज्यस्थालीप्रकर्तव्यातैजसद्रव्यसम्भवा। महीमयीवाकर्तव्यासर्वास्वाज्याहुतीषुच ॥ आज्यस्थाल्याःप्रमाणंचयथाकामंतुकारयेत् ॥ तैजसंसुवर्णादि ॥६ चरुस्थाली रेणुः–मृण्मय्यौदुम्बरीवापिचरुस्थालीप्रशस्यते। तिर्यगूर्ध्वंसमिन्मात्राद्दढानातिबृहन्मुखी ॥ कुलालचक्रघटितमासुरंमृण्मयंस्मृतम्। तदेवहस्तघटितंस्थाल्यादिखलुदैविकम्॥ औदुम्बरीताम्रमयीत्यर्थः ॥७ पूर्णपात्रलक्षणं रेणुः-यावतान्नेन भोक्तुस्तु तृप्तिः पूर्णैव जायते । तावताधर्मतःकुर्यात्पूर्णपात्रमितिस्थितिः ॥ अन्यच्च–यवैर्वात्रीहिभिःपूर्णंशूर्पंतत्पूर्णपात्रकम् ॥ तथाच–अष्टमुष्टिभवेत्किञ्चितकिञ्चिदष्टौतुपुष्कलम् । पुष्कलानि च चत्वारि पूर्णपात्रं विदुर्बुधाः ॥ शूर्पप्रमाणम्–शूर्पंत्वरत्निमात्रंस्यादैषीकंवैणवंतुवा । लम्बंत्वरत्निमात्रंस्यादिति यज्ञविदोविदुः ॥

कांसानी थाली एक
कांसानी वाटकी बे
त्रांबानी मोटी तरभाणी १
त्रांबानो मोटो वाटको एक
त्रांबानी आचमनी मोटी एक
घंटा १, आरती पीतलनी १
धूपकरवानुं पात्र १
दीप माटे त्रांबाना कोडिया बे
रंगुलीपुरवानुंयंत्रपित्तलनुं

जनोइनाजोडा दश
अक्षतपुञ्जअथवापूगीफल
उपर सूर्यादिनुंआवाहन करवुं
होयतोमूर्तिनीजरूर नथी पण
जोनवेग्रहोनी मूर्तिओस्थापवी[1]
होय तो तेनी विगत–
सूर्यनी त्रांबानी, चंद्रनी रुपानी
मंगलनी त्रांबानी
बुधनी सोनानी

गुरुनीसोनानी, शुक्रनी रुपानी
शनिनी लोढानी
राहुनी लोढानी
केतुनीकांसानीअथवाशिसानी
ग्रहतथाब्रह्मानास्थापनमाटे
सफेत मलमल वार बे
गणपति तथा मातृका स्थापन
माटे लाल कापड वार एक

समग्र ग्रहोमाटे एकजवस्त्रतथा
उपवस्त्रअर्पण करवुं होयतो
मुकटो एक तथा
रेशमी ककडो श्वेत एक
अथवा धोतीयुं एक
अने खेस एक
जो अनुकूलताहोयतोप्रत्येक
ग्रहमाटेजुदाजुदा रंगनांवस्त्रो
रेशमीकटकानी विगत–

सूर्य माटे लाल, चंद्रमाटे श्वेत
मंगलमाटे लाल, बुधमाटेलीलुं
गुरुमाटेपीळुं, शुक्रमाटेश्वेत
शनिमाटेकाळुं, राहुमाटेलालु
केतुमाटे वादळी
स्थंडिल अथवा कुंडमाटे माटी
होममाटे घी सेर पांच
गायनुं दूध सेर०।, गायनुं–
दहींसेर०।, गायनुंघृतनवटांक

पञ्चगव्यनी विगत
लालगायनुंमूत्रआठमासा
श्वेतगायनुंछाणसोलमासा
पीलीगायनुंदूधबारमासा
कालीगायनुंदहिंबारमासा
कालीगायनुंघृतआठमासा
जोजूदाजूदारंगवालीगायो
नांमूत्रादिमलवाअसंभवहो
यतो गमे ते गायना लेवां

---

१ ग्रहप्रतिमाधातवः–रविभौमौताम्रमयौराजतौसोमभार्गवौ । बुधजीवौस्वर्णमयौलौहौमन्दविधुन्तुदौ ॥ केतुःकांस्योथवासीसःप्रतिमाधातवःस्मृताः ॥ याज्ञवल्क्यः–ताम्रिकात्स्फटिकाद्रक्तचन्दनात्स्वर्णकावुभौ । राजतादयसःसीसात्कांस्यात्कार्याग्रहाःक्रमात् ॥ स्ववर्णैर्वापरेलेख्यागंधैर्मंडलकेषुवा ॥ ग्रहप्रतिमाकारःमात्स्ये–पद्मासनःपद्मकरःपद्मगर्भसमद्युतिः । सप्ताश्वरथसंस्थोपिद्विभुजःस्यात्सदारविः ॥ श्वेतःश्वेताम्बरधरोदशाश्वःश्वेतभूषणः । गदापाणिर्द्विबाहुश्चकर्तव्योवरदःशशी ॥ रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः । चतुर्मुखो मेषगमो वरदःस्याद्धरासुतः ॥ पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः । खड्गचर्मगदापाणिः सिंहस्थोवरदोबुधः ॥ देवदैत्यगुरूतद्वत्पीतश्वेतौचतुर्भुजौ । दण्डिनौवरदौकार्यौसाक्षसूत्रौकमण्डलू ॥ इंद्रनीलद्युतिः शूली वरदो गृध्रवाहनः।बाणबाणासनधरः कर्तव्योर्कसुतः सदा ॥ करालवदनःखड्गचर्मशूलीवरप्रदः । नीलसिंहासनस्थश्चराहुश्चात्रप्रशस्यते ॥ धूम्राद्विबाहवःसर्वेगदितावीकृताननाः । गृध्रासनगतानित्यंकेतवःस्युर्वरप्रदाः ॥ सर्वेकिरीटिनःकार्याग्रहालोकहितावहाः । स्वाङ्गुलेनोच्छ्रिताः सर्वेशतमष्टोत्तरावधि ॥ २ ग्रहवस्त्राणि–यथावर्णप्रदेयानि वासांसि कुसुमानिच । नवग्रहेभ्योदेयानि सुगंधसहितान्यपि ॥ ग्रहवर्णाःवसिष्ठः–भास्कराङ्गारकौरक्तौशुक्लौशुक्रनिशाकरौ । बुधजीवौसुवर्णाभौकृष्णौराहुशनैश्चरौ ॥ केतवोधूम्रवर्णाश्चग्रहवर्णाःप्रकीर्तिताः ॥ ३ रुद्रकल्पद्रुमजपपरिच्छेदे–सुवर्णादिपात्रेपद्मपलाशादिपत्रे वा ताम्रायाः कृष्णायाः वा गोःपलमितस्याष्टमाषपरिमितस्य वा गोमूत्रस्य गायत्र्याग्रहणम् ॥ गंधद्वारामितिमंत्रेणश्वेतायागोः अंगुष्ठार्धमितस्य षोडशमाषपरिमितस्य वा गोमयस्य ग्रहणम् ॥ आप्यायस्वेतिताम्रायाःहेमवर्णाया वा गोः सप्तपलस्यद्वादशमाषमितस्य वा गोमयाष्टस्यगोमूत्रात्रिगुणस्य वा क्षीरस्यादानम् ॥ दधिक्राव्ण इति रक्तायाः कृष्णवर्णाया वा गोस्त्रिपलस्यदशमाषपारीमितस्य

| | | | | | |
|---|---|---|---|---|---|
| कुशनुं जल चारमासा | जंबीरएटलेएकजातनुं | माटिनां कोडियांबे | समिधोनीविगत– | शमीनी समिध ८ | नवग्रहोमाटे |
| चोखापालीएक, घहुंशेरबे | लांबुंलिम्बु १ | पंचपल्लवनी विगत | आकडानीसमिध ८ | दूर्वाना जुडा २ | पुष्पोनी विगत- |
| अडदशेरएक, | जामफल २ | पीपलनांपान५,उंबरानांपान५ | खाखरानीसमिध १११ | दर्भनो मोटो जुडो १ | सूर्यमाटे जासुंद |
| सफेत कूष्माण्ड १ | बिजोरुं १, केलांसोनेरीबार | पिंपरीनांपान ५ | खेरनीसमिध ८ | छुटांपुष्पटोपलीएकनीचेमुजब | चन्द्रमाटे श्वेतकमल |
| लीलीद्राक्षसेर ०। | दाडिम ३, मोसंबि ३, | आंबानांपान१०,वडनांपान ६ | अघाडानीसमिध ८ | गुलाब, मोगरो,जावेलं,कमल, | भौमार्थे रक्तकणेर |
| शेरडी कक्डो १ | सफरचंद ३ | तोरणमाटे आंबानांपान | पिपलानीसमिध ८ | बकुल, सेवति, कणेर, | बुधमाटे चंपक |
| लीलीसोपारी एक | ऋतुप्रमाणे,बीजांफलोएकएक | नागरवेलनां पान २५ | उंबरानीसमिध ८ | चंपक विगेरे | गुरुमाटे शतपत्रिका |
| नारंगी(संतरां) ३ | केलनास्थंभ ४, | | | | |

गोमयात्पञ्चगुणस्यगोमूत्राद्द्विगुणस्यवादध्नोग्रहणम् ॥ तेजोसीतिमन्त्रेणकापिलायावागोरेकपलस्याष्टमासमितस्य वा गोमयचतुर्गुणस्य वाज्यस्यग्रहणम् ॥ देवस्यत्वेत्यादिकेनपूष्णोहस्ताभ्यांगृह्णामी-त्यन्तेनमन्त्रेणपलमितस्यचतुर्मांषामितस्यवाकुशोदकस्यग्रहणम् । गोमूत्रादिकापिलंवाग्राह्यंअलाभेगव्यमात्रम् ॥ १ पञ्चपल्लवाः ब्राह्मे–अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः । पञ्चभङ्गा इति प्रोक्ताः सर्वकर्मसु शोभनाः ॥ २ ग्रहसामिधः–अर्कः पालाशखदिरअपामार्गोथपिप्पलः । उदुम्बरःशमीदूर्वाकुशाश्चसमिधःक्रमात् ॥ अलाभेतुप्रकर्तव्यासर्वेपालाशजाःशुभाः ॥ यस्ययस्यग्रहस्ययायासमित सासातस्यतस्याधिदेवताप्रत्यधिदेवतानांचेतिकैश्चिदुक्तमस्तितथापिकल्पद्रुमकारैस्तुअधिदेवताप्रत्यधिदेवतापञ्चलोकपालदेवतावास्तुक्षेत्रपालदिक्पालदेवतानां पालाशसमिद्भिरेव होम उक्तः तथै-वानुसृतमस्माभिः ॥ अत्र समित्संख्या अष्टाष्टपक्षाश्रयेण यत्रान्यत्पक्षाश्रयेण होमः तत्र समित्संख्याद्याधिकाज्ञेया ॥ समिद्धोमसंख्या–ग्रहान्प्रत्येकं प्रतिद्रव्यंअष्टोत्तरशतमष्टाविंशत्यष्टौवाआहुती-नांसंख्या । यदाग्रहाणामष्टोत्तरशतंतदाअन्येभ्योऽष्टाविंशतिः । यदाग्रहाणामष्टाविंशतिस्तदाऽन्येभ्योऽष्टौ । यदाग्रहाणामष्टौतदाऽन्येभ्यश्चतस्रःइतिसंप्रदायः ॥ वसिष्ठः–यदिग्रहाणामष्टौस्याद-धिप्रत्यधिकेषुच । चतुश्चतुर्हुनेद्धेरम्बादीनांद्विद्विसंख्यया ॥ समिधांलक्षणम्-यज्ञपार्श्वे–समित्पवित्रंवेदश्चत्रयःप्रादेशसंमिताः ॥ छन्दोगपरिशिष्टेकात्यायनः–नाङ्गुष्ठादधिकाकार्यासमित्स्थूलत-राक्वचित् । न वियुक्तत्वचाचैवनसकीटानपाटिता ॥ प्रादेशान्नाधिका नोना न तथा वै द्विशाखिका । न सपर्णासमित्कार्याहोमकर्मसुजानता ॥ स्मृत्यर्थसारे–सत्वचःसामिधःकार्याऋजुश्लक्ष्णाः समास्तथा । शस्ता दशाङ्गुलास्तास्तु द्वादशाङ्गुलिकास्तु वा । आर्द्राःपक्काःसमच्छेदास्तर्जन्यङ्गुलिवर्तुलाः । अपाटिताश्चाद्विशाखाः कृमिदोषविवर्जिताः ॥ ईदृशाहोमयेत्प्राज्ञःप्राप्नोतिविपुलांश्रियम् ॥ प्रागग्राःसमिधोग्राह्या अखर्वानैव स्फाटिताः । काम्येषु वश्यकर्मादौ विपरीताजिघांसतः ॥ विशीर्णाविफलाह्रस्वा वक्राबहुशिखाः कृशाः । दीर्घाः स्थूलाघुणैर्जुष्टाः कर्मसिद्धिविनाशकाः ॥ प्रादेश-मात्राःसमिध अशाखा अपलाशिनी । होतव्यामधुसर्पिर्भ्यांदध्नाक्षीरेणसंयुताः ॥ शङ्खः–समित्पुष्पकुशादीनिब्राह्मणःस्वयमाहरेत् ॥ शूद्रानीतैः क्रयक्रीतैः कर्मकुर्वन् व्रजत्यधः ॥ संस्काररत्नमा-लायाम्–यज्ञाद्यर्थं शूद्रादिभिराहृतानां दर्भसमिदादीनां पवमानानुवाकेन प्रोक्षणाच्छुद्धिः ॥

सुक्रमाटे जाई
शनिमाटे मल्लिका
राहुमाटे कुन्द
केतुमाटे चित्रित पुष्प
तुलसीपत्र पैसा १ नां
बिल्वपत्र पैसा १ नां
पुष्पना हार १०

बत्तीमाटेकापुस,कांडिनुंबाकस
दडियापुडो १, पत्रावली पंदर
वरुणीना विप्रो पांच अथवा
सात श्रद्धा प्रमाणे ते
प्रत्येकमाटे, वरुणसाहित्य—
धोतीयां ५, खेस ५
गौमुखी ५, मालारुद्राक्षनी ५

पंचपात्र ५, तरभाणी ५
अर्घपात्र ५, आचमनी ५
टुवाल ५, आसन ५
स्रुक्[1], स्रुव[2], प्रणीता[3], प्रोक्षणी[4]
छाणां १२ तथा, होम माटे
खेरनां, डबल फोडेलां
सरपण मण बे

वरुणीना ब्राह्मणो माटे सवा-
रमां दूध. मध्याह्ने फलाहार
तथा कर्मसमाप्तिये भोजन
अथवा सीधां, वांसनीभूंगळी
ग्रह मातृका तथा ब्रह्मानास्था-
पन माटे लाकडाना बाजठ ३
यजमानादिने बेसवा पाटला ५

पाटलापर बिछावा गालिचा
कंबल अथवा दर्भासनो.
ग्रहपरत्वेनैवेद्योनी विगत—
सूर्यमाटे गुडोदन
चन्द्रमाटे घृतपायस
मङ्गलमाटे कंसार

बुधमाटे क्षीर
गुरुमाटे दध्योदन
शुक्रमाटे घृतोदन
शनिमाटे तिल्माषमिश्रित
राहुमाटे गुडोदन
केतुमाटे खीचडी

---

१ स्रुक्लक्षणं कात्यायनः—बाहुमात्र्यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिलाहंसमुखप्रसेका मूलदण्डा भवन्ति ॥ त्रिःप्रादेशो बाहुः । प्रसृतांगुलिः पाणिरामणिबंधनाद्धस्त उच्यते । तन्मात्रं पुष्करं भवतीत्यर्थः । कारिकायां तु—षड्त्रिंशाङ्गुलदीर्घास्रुक्कारयेत्खादिरादिभिः । कर्दमे गोपदाकारा पुष्करं तद्वदेवहि । पुष्कराग्रं षडंशं तु खातं द्यंगुलविस्तृतम् । अंगुष्ठैकं स्थूलतरे दंतेतस्यच कंकणम् । २ स्रुवमाह कात्यायनः—खादिरस्रुवः ॥ अरत्निमात्रस्रुवोङ्गुष्ठपर्ववृत्तपुष्करः ॥ यज्ञपार्श्वे—अङ्गुष्ठपर्ववृत्तश्चारत्निमात्रः स्रुवो भवेत् ॥ पुष्करार्द्धंभवेत्खातं पिण्डकार्द्धं स्रुवस्तथा ॥ पिण्डकार्द्धं मुष्टयर्द्ध-मित्यर्थः । ३ प्रणीतालक्षणं रेणुः—द्विषडंगुलदीर्घश्च तदर्द्धेन तु विस्तृतः । चतुरंगुलखातस्तु मूलदण्डो विकङ्कतः ॥ प्रस्थमात्रोदकग्राही प्रणीता चमसो भवेत् ॥ चमसलक्षणं यज्ञपार्श्वे—चमसानां तु वक्ष्यामि दण्डाःस्युश्चतुरङ्गुलाः । त्र्यङ्गुलं तु भवेत्खातं विस्तारे चतुरङ्गुलम् ॥ विंशत्यङ्गुलदीर्घत्वमिति यज्ञविदो विदुः ॥ ४ प्रोक्षणीपात्रलक्षणम् ॥ रेणुः—वैकङ्कतं पाणिमात्रं प्रोक्षणीपात्रमुच्यते । हंसवक्त्रप्रेसकं च त्वग्बिलं चतुरङ्गुलम् ॥ ग्रहनैवेद्यानिशान्तिसारे—गुडौदनंरवेर्दद्यात्सोमायघृतपायसम् । अङ्गारकायसंयावंबुधायक्षीरपाष्ठिकम् ॥ दध्योदनंतु जीवाय शुक्रायचघृतोदनम् । शनैश्चरायकृसरमाजमांसंचराहवे चित्रौदनंतुकेतुभ्यः ग्रहनैवेद्यमीरितम् ॥ ग्रहवेदीमाहमत्स्यपुराणे—गर्तस्योत्तरपूर्वेणवितस्तिद्वयविस्तृताम् । वप्रद्वययुतांवेदिं वितस्त्यु-च्छ्रायसंयुताम् ॥ स्थापनायचदेवानांचतुरस्रामुदक्प्लवाम् ॥ गर्तस्यकुण्डस्येत्यर्थः ॥ उत्तरपूर्वेणईशानभागेत्यर्थः ॥ वप्रद्वयंनाममेखलाद्वयंतत्रद्व्यङ्गुलोच्छ्रायः प्रथमवप्रःत्र्यङ्गुलोच्छ्रायोद्विती-यवप्रः विस्तारस्तुद्वयोरप्यङ्गुलपरिमितः ॥ अत्रप्रकारान्तरंवसिष्ठः—कुण्डस्यरुद्रदिग्भागेद्विहस्तपीठमाचरेत् । किञ्चिन्मध्योन्नतं कुर्यादुच्छ्राये द्वादशाङ्गुलम् ॥ त्रिंशाङ्गुलंप्रकर्तव्यंह्यन्तरंकुण्ड-पीठयोः । वस्त्रेणाच्छाद्यतत्पीठंतत्प्रमाणेनधीमता ॥ तत्रचाष्टदलं पद्मं कुर्याच्छ्रेष्ठैः सिताक्षतैः ॥

## ॥ ग्रन्थकर्तृप्रशस्तिः ॥

क्षेत्रं हि भारतेऽस्मिन्महत्सुपुण्यं चकास्ति सिद्धपुरम् । कपिलाश्रमविख्यातं यत्र प्राची सरस्वती वहति ॥ १ ॥ मुक्ता च देवहूतिर्यस्मिन्स्नानं सुवर्णदानं च । श्राद्धं मातृगयाख्यं भवत्यगणितं कृतं सर्वम् ॥ २ ॥ यस्मिन्नुत्तरखंडान्मंत्रद्रष्टशो मूलराजभूपतिना । आहूता हि सहस्राधिकषोडशवाडवाः सुविख्याताः ॥ ३ ॥ तेष्वेकाविंशतिभ्यो विप्रेभ्योऽदायि सिद्धपुरंह्येतत् । सर्वोपस्करयुक्तं तथैकविंशतिपदानि दत्तानि ॥ ४ ॥ दत्तं प्रथमं पदकं द्विवेदिने भार्गवाय पुत्राय । द्वितीयकं दत्तं द्विवेदिने भार्गवाय पित्रे च ॥ ५ ॥ दत्तं पदं तृतीयं कौशिकगोत्राय पंडितायाथ । दत्तं पदं चतुर्थं त्रिवेदिने दाल्भ्याय गोत्राय ॥ ६ ॥ पंचमपदकं दत्तं द्विवेदिने गौतमाय गोत्राय । दत्तं षष्ठं पदकं वत्ससगोत्राय ठक्कुरायाथ ॥ ७ ॥ सप्तमपदकं दत्तं द्विवेदिपाराशराय मंत्रद्रष्टशे । अष्टमपदकं दत्तं चोपाध्यायाय कश्यपायाथ ॥ ८ ॥ दत्तं नवमं पदकं भारद्वाजद्विवेदिने सुमहत् । दशमं पदकं दत्तं शाण्डिल्याय द्विवेदिने चाथ ॥ ९ ॥ एकादशं च पदकं शौनकगोत्राय पंडितायाथ । दत्तं द्वादशपदकं त्रिवेदिने वै वासिष्ठगोत्राय ॥ १० ॥ मुख्यं त्रयोदशपदं मौनसगोत्राय ठक्कुरायाथ । तद्वच्चतुर्दशपदं याज्ञिकविप्राय गर्गगोत्राय ॥ ११ ॥ पंचदशं वै पदकं द्विवेदिने कुच्छसाय गोत्राय । उद्दालकाय दत्तं षोडशपदकं द्विवेदिने चाथ ॥ १२ ॥ कृष्णात्रिणे हि दत्त द्विवेदिने तत्र सप्तदशंपदकम् । अष्टादशं पदं वै कौण्डिन्याय द्विवेदिने दत्तम् ॥ १३ ॥ एकोनविंशतितमं पंडितमांडव्यगोत्रिणे तैस्म । विंशतितमं पदं यच्चोपाध्यायोपमन्यवे दत्तम् ॥ १४ ॥ राज्ञा प्रसन्नमनसा विप्रवराय द्विवेदिने चाथ । श्वेतात्रिणे हि तस्मै तथैकविंशतितमं पदं दत्तं ॥ १५ ॥ तेषां मुख्यतमे श्रीठक्कुरसंज्ञे त्रयोदशेपदके । शुक्ले यजुषि श्रेष्ठे माध्यंदिन्यां वाजसनेय्यां च ॥ १६ ॥ धारांबा कुलदेवी यस्य गणेशो महोदराख्यश्च । वीरेश्वरश्च यक्षो महाकालभैरवः शर्म विष्णुः ॥ १७ ॥ तादृङ्मौनसगोत्रे मौनसवैतानहव्यसावेति । प्रवरत्रयसंयुक्ते गणको गोविंदरामशर्माऽभूत् ॥ १८ ॥ गणितादित्रिस्कंधज्योतिःशास्त्रज्ञ एव यः प्रथितः । भाईशङ्करनामा तस्य सुतः शास्त्रवित्सुजनसेव्यः ॥ १९ ॥ तत्तनय उमाशङ्कर आस्तिक्यप्रभृतिविप्रगुणयुक्तः । ज्ञानादियुतो ज्योतिषवैद्यकसद्धर्मशास्त्रनिष्णातः ॥ २० ॥ दुर्गाशङ्करशास्त्री तस्य सुतोऽहं स्वयं सुविख्यातः । श्रीब्रह्मचारिपदभृद् यस्य गुरुर्देवचेतनानन्दः ॥ २१ ॥ श्रीवालुकेशसंस्कृतपाठगृहाध्यापकप्रधानेन । सिद्धपुरे संवसता ग्रन्थः संयोजितो मया चायम् ॥ २२ ॥ ग्रहशान्त्याख्यो भूयादुपयुक्तः कर्मकाण्डिविप्रेभ्यः । इत्येवमर्थयेऽहं दुर्गाशङ्करसुधीर्विभुं नित्यम् ॥ २३ ॥

॥ अथ ग्रहशान्त्युपयोगिपरिभाषा // न्तये हितं शान्तिकं ) शान्तिकलक्षणम्–अस्पष्टपापनिदानकैहिकमा
क्षयादिहरदानादावतिप्रसङ्गं वारयितुं निदानकान्तम् । आमुष्मिक... निवारके तं वारयितुमैहिकेति । प्रायश्चित्तं वारयितुं मात्रपदम् । प्रायो
भिचारादौ वारयितुं पापाप्रयोजकम् । तयोः फलतो हिंसात्वेन तदनुष्ठाने प्रायश्चित्तोक्तेश्च पापप्रयोजकत्वात् । अनिष्टनिवर्तकत्वं च शान्ति
अस्पष्टपापनिदानपापनाशरूपसामग्रीविघटकत्वेन पुष्टिफलकं वैधं कर्म पौष्टिकम् ॥ **शान्त्यादौ ग्रहमखस्यावश्यकता याज्ञवल्क**
कर्मणां फलमाप्नोति श्रियं प्राप्नोत्यनुत्तमाम् ॥ मात्स्ये–विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु । नववेश्मप्रवेशे च नारीणां प्रथमार्तवे ॥ नवग्रहम
स्मार्तवैद्यनाथः–उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम् । तिरश्चावोक्षणं प्रोक्तं नीचेनाभ्युक्षणं स्मृतम् ॥ अग्निप्रणयनम्—शुभं पात्रं तु
नवेनाभिमुखेन तम् ॥ परिसमूहनम्–पांसूनामपसारणं तत्र कारिकाकारः–एकेन दर्भेण वारत्रयम् ॥ अन्येतु त्रिभिर्दर्भैर्वारत्रयम् ॥ तच्च
योग्यैर्दर्भादिभिर्यावत्पांस्वपसारणं भवति तावत्कार्यमिति केचित् ॥ **वरलक्षणम्** ॥ रेणुः–वरोऽभिलषितं द्रव्यं सारभूतं तदुच्यते ॥ स्रु
मूलमध्याच्च मध्यतः । स्रुवं धारयते विद्वान् होमकार्येषु सर्वदा ॥ **चरुलक्षणम्** ॥ कात्यायनः–स्वशाखोक्तेन सुस्विन्नो ह्यदग्धः का
( गलितमंडः ) भवेत् ॥ **हविर्लक्षणम्** ॥ कात्यायनः–व्रीहीन्यवान्वा हविषि प्रतीयाद्यज्ञकर्मसु ॥ **आज्यलक्षणम्** ॥ कात्यायन
पयोसीति मन्त्रलिङ्गात् । तदभावे प्रतिनिधिमाह मण्डनः–गव्याज्याभावतश्छागीमहिष्यादेर्घृतं क्रमात् । तदभावे गवादीनां क्रमात्क्षीरं विधीयते
कुशानां उपयमनकुशानां च लक्षणम् ॥ ग्रहयज्ञकल्पवल्ल्याम्–स्रुवसंमार्जनार्थाय पञ्च वाथ त्रयोऽपि वा । प्रादेशमात्रान् गृह्णीयात्संमार्गकुशसंज्ञ

**अथ ग्रहशान्तिप्रयोगानुक्रमः**––गणेशं पूजयेदादौ स्वस्तिपुण्याहवाचनम् । मातृणां पूजनं कार्यं नान्दीश्राद्धमतः प
सादस्यं ऋत्विजश्चैव जापकान्वरयेत्ततः ॥ दिग्रक्षणं ततः कार्यं पञ्चगव्यं यथाविधि । भूमिं संपूज्य विधिवत्तत्र संस्कारपञ्चकम् ॥ स्थण्डिले
रणं प्राणप्रतिष्ठा स्थापनार्चनम् ॥ ग्रहादीन्स्थापयित्वाथ स्थापयेद्रुद्रकुम्भकम् । अन्वाधानं ततः कृत्वा कारयेत्कुशकाण्डिकाम् ॥ लिङ्गोक्तैर्नाममन
द्राहुतिपुरःसरम् ॥ पूजा स्विष्टं नवाहुत्यो बलिं पूर्णाहुतिं तथा । स्रवाशादिविमोकान्तं होमशेषं समापयेत् ॥ श्रेयःसंपादनं पश्चादभिषेको वि-

निवर्तकपापप्रयोजकं वैधं कर्म शान्तिकम् ।
वत्तं त्वामुष्मिकानिष्टनिवर्तकमपि । अभिचारप्रत्य-
कस्य ॥ ( पुष्ट्यै हितं पौष्टिकं ) पौष्टिकलक्षणम्–
**क्ता**—आदौ विनायकं पूज्य ग्रहाँश्चैव विशेषतः ।
खं कृत्वा ततः कर्म समारभेत् ॥ स्थण्डिलाभ्युक्षणम् ॥
कांस्यस्य तेनाग्निं प्रणयेद्बुधः । तस्याभावे शरावेण
कसंस्थं उदक्संस्थं वा कार्यम् ॥ पांस्वपसारण-
**धारणप्रकारः** ॥ संग्रहे–अग्रमध्याच्च यन्मध्यं
ः शुभः । न चातिशिथिलः पाच्यो न च वीतरसो
–घृतमाज्ये लिङ्गादिति । तच्च गव्यमेव । महीनां
। तदभावे दधि ग्राह्यमलाभे तैलमिष्यते ॥ संमार्ग-
कान् । उपयमनकुशाः सप्त पञ्च वाथ त्रयोऽपि वा ॥
म् ॥ आचार्यं वरयित्वाथ ब्रह्माणं गाणपत्यकम् ।
प्रतिष्ठाप्य ध्यायेत्तं मुखपूर्वकम् । मूर्त्यग्न्युत्ता-
वा यथाविध्युक्तसङ्ख्यया । ग्रहहोमं ततः कुर्या-
सजनम् । विप्राशिषः प्रगृह्णीयात्तान्मिष्टान्नेन भोजयेत् ॥

प्रताकारे संस्कृतमां प्रगट थनार ग्रंथोनी यादि.

योगशास्त्र (४, प्रकाश टीका साथे)

शान्तिनाथचरित्र (गद्य)

卐

આગામી પ્રતાકારે ભાષાંતરે પ્રગટ થશે તેની યાદિ.

ધન્યકુમાર ચરિત્ર (ભાગ ૧-૨)

વિક્રમચરિત્ર

ઉપદેશમાળા (ધર્મદાસ ગણીકૃત)

卐